उद्गीथाचार्य्यप्रणीतम्

# ऋग्वेद-भाष्यम्

( १०, ५, ४—१०, ३४, ३. )

लवपुरम्

( १९९२ वि० )

# THE RIG-VEDA

WITH

The Commentary of

## UDGITHA-ACHARYA

( X, 5, 4—X, 34, 3. )

D. A.-V. College Resaerch Department,

LAHORE

1935.

# दयानन्दमहाविद्यालय-संस्कृतग्रन्थमाला

सा च

दयानन्दब्राह्ममहाविद्यालयीयाचार्यपदप्रतिष्ठितपूर्वेण दयानन्दमहाविद्यालयीयानुसन्धानालये विश्वेश्वरानन्दानुसन्धानालये चाध्यक्षपदाधिकारिणा ऐम० ए०, ऐम० ओ० एल०

इत्युपाधिधारिणा

## विश्वबन्धुशास्त्रिणा

बहुभिर्विद्वद्भिः सङ्गत्य

सम्पादिता

तस्यां चायं

## पञ्चदशो ग्रन्थः

लवपुरम्

( १९९२ वि० )

# THE D. A.-V. COLLEGE SANSKRIT SERIES.

Edited

in conjunction with other scholars

BY

**VISHVA-BANDHU SHASTRI**, M.A., M.O.L.

Director, D. A.-V. College Research Deptt. and Vishveshvarananda Research Institute; formerly, Principal, Dayananda Brahma Mahavidyalaya.

Volume Fifteen.

LAHORE

1935.

ओ३म्

# ऋग्वेद भाष्यम् ।

## ❀ निर्गतवनवासि-उद्गीथाचार्यप्रणीतम् ❀

दशम मण्डलम् ।

पञ्चम सूक्तम् ।

ऋतस्य हि वर्तनयः सुजातमिषो वाजाय प्रदिवः सचन्ते ।
अधीवासं रोदसी वावसाने घृतैरन्नैर्वावृधाते मधूनाम् ॥ ४ ॥

[ मधूनां ] मृष्टानां घृताद्यन्नानामवयवभूतैः स्वांशलक्षणैः । तस्माद्वयमपि श्रेयसेऽर्थमग्निमाराधयामः ॥

सप्त स्वसॄररुषीर्वावशानो विद्वान्मध्व उज्जभारा दृशे कम् ।
अन्तर्येमे अन्तरिक्षे पुराजा इच्छन्वव्रिमविदत्पूषणस्य ॥ ५ ॥

सप्त स्वसृ-सप्त जिह्वा ज्वालाख्या । काली करालीत्येवमाद्याः। स्वसृ भगिनीभूता । तदग्नेर्जातत्वात् स्वयंसारिणीर्वा । अरुषीः आरोचनाः । वावशान वावदयमान अत्यर्थं शब्द्यमानः स्तोतृभिर्हूयमान इत्यर्थः । विद्वान् सर्ववेदाग्निः* । मध्वः मधुस्वादस्य मृष्टस्य हविषः पूर्णा इति शेषः । उज्जभार ऊर्ध्वं हरति । दृशे दर्शनाय सर्वस्य । उद्धृत्य च यत्तत्र हविषिकं उदकं रसीभूतं हविरित्यर्थः । तत् अन्तः मध्ये । येमे नियच्छति स्थापयति । कस्यान्तर्येमे । अन्तरिक्षे आकाशे स्थितस्य पूष्णः । कुत एतदवगम्यते† । ऋगन्ते तस्य श्रवणात् । आहुत्याधारत्वाच्च । पुराजा पूर्वमादिसर्गे प्रजापतेर्जातः । किमर्थमादित्यस्यान्तर्येमे इच्छन्कर्त्तुं कामयमानः । किं वव्रिं रूपं । कीदृशं सामर्थ्यादीप्तं । कस्य पूषणस्य पूष्णः । तच्च दीप्तं रूपमविदत् विन्दति । तेन च हवीरसेन दीप्तरूपः पूषाप्ययं भवतीत्यर्थः । अथ-'मूर्धा भुवो भवति नक्तमग्निस्ततस्सूर्यो जायते प्रातरुद्यन्' इति मन्त्रान्तरे दर्शनादादित्यात्मना यदाग्निः स्तूयते तदैव-

---

सर्वविदग्निः ! † एतदनम्यते-कोषपाठ । ऋ० १०।८८।६ ॥

मर्थयोजना कार्या। सप्त रश्मीन् स्वयं सतत्रीन्? आरोचनान् कामयमानः स्तूयमानो स्तोतृभि· विद्वानग्निर्मध्व उदकस्य भौमस्य पूर्णानुदकवेलाया· मूर्ध्वं हरति। आदित्यात्मना स्थितः दर्शनाय प्रकाशनाय सर्वस्य। हृत्वा च उदकन्द्यावापृथिव्योर्मध्ये स नियच्छति । अन्तरिक्षे विद्युदात्मना स्थित्वा। इच्छन्ग्रूपं लभते वर्षासु पृष्णस्सकाशात् स्वभूतं वा ॥

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ॥ ६ ॥

सप्त मर्या०-सप्त मर्यादा व्यवस्थिता अलंघनीयाः-'स्तेयं गुरुतल्पारोहणं ब्रह्महत्यां भ्रूणहत्यां सुरापानं दुष्कृतस्य कर्मणः पुनः पुनस्सेवां पातकेऽनृतोद्यम्* इति। कवयो मेधाविनः। कवयो हिरण्यगर्भ-प्रभृतयः मेधाविनः। ततक्षुः तक्षतिः करोतिकर्मा कृतवन्तः। तासाम्मर्यादानाम्मध्ये एकां इत् इच्छब्दोऽप्यर्थे एकामपि मर्यादामभिगच्छन्। अंहुरः अंहस्वान् पापवान् भवति। यस्त्वन्यनुग्रहाणां ह स्कंभभूतो भवति स्कंभवदाश्रयभूतो भवतीत्यर्थः। परत्रापि उपमस्य सर्वस्य जगतः उपनिमातुरग्नेः। नीळे स्थाने अग्निलोकाख्ये। पथां वृष्टिलक्षणानामपामुदकानां। विसर्गे विसर्जने अन्तरिक्षे। धरुणेषूदकेषु मेघोदरागतेषु विद्युदात्मना वा। तस्थौ तिष्ठति ॥

असच्च सच्च परमे व्योमन्दक्षस्य जन्मन्नदितेरुपस्थे ।
अग्निर्ह नः प्रथमजा ऋतस्य पूर्व आयुनि वृषभश्च धेनुः ॥ ७ ॥

असच्च स०-असच्चाव्याकृत वस्तु। सच्च व्याकृतं। परमे व्योमन् व्योमनि कारणात्मनाकाशे स्थित। तत्सर्वमग्निरेव तन्मूलत्वाद्यागस्य यागमूलत्वाच्च सर्वस्य। दक्षस्य च प्रजापतेः। जन्मन् जन्मनि उत्पत्तौ निमित्तमग्निरेव उक्तेनैव न्यायेन। अदितेः पृथिव्याः। उपस्थे उपस्थाने उपरि। अग्निरेव स्थितः। आधिपत्येनमात्र?एतवत्यर्थः? वृषभश्च धेनुश्चान्यच्च सर्वन्द्रव्यमस्माकमग्निरेव भवति तदात्म्यात्तत् कार्ये कर्तृत्वा॥

* निरुक्त ६।२७ ॥

† पाठोऽत्र त्रुटित प्रतीयते अत्रत्य।

अय स यस्य शर्मन्नवोभिरग्नेरेधते जरिताभिष्टौ ।
ज्येष्ठेभिर्यो भानुभिर्ऋषूणां पर्येति परिवीतो विभावा ॥१॥

अयं स य०–अ[यं] सोऽग्निरस्माभिराहूत· यागार्थस्याग्नेरभिष्टौ यागे कृते सति। शर्मन् शरणे ऋभिर्ज्येष्ठेभिर्वृद्धाभिर्वा*। परिवीतः परिवृतः परिवेष्टितः। पर्येति सर्वतो गच्छति। यत्र यत्र गन्तव्यं तत्र तत्राप्रतिहतगतिर्गच्छतीत्यर्थः। विभावा विविधदीप्तः।

यो भानुभिर्विभावा विभात्यग्निर्देवेभिर्ऋतावाजस्रः ।
आ यो विवाय सख्या सखिभ्योऽपरिह्वृतो अत्यो न सप्तिः ॥२॥

यो भानुभिः–यश्चाग्निर्विभावा विविधदीप्तिः। ऋतावा च सत्यवानुदकवान् यज्ञवान् वा। अजस्रश्चानुप[क्षी]णः अहिंसितो वा। केनाचिदनभिभूत इत्यर्थः। भानुभिर्देवेभिः दीप्तिभिर्दानादिगुणयुक्ताभिः स्तुत्याभिः प्रतिगन्त्रिभिर्वा। विभाति विविधन्दीप्यते। यः यश्च। आ विवाय आभिमुख्येन गच्छति। सख्या सख्यानि सखिभिः कर्त्तव्यानि हविर्वहनादीनि कर्माणि कर्त्तुमिति शेषः। कस्यार्थाय सखिभूतानां यजमानानामर्थाय। कथं गच्छति अपरिह्वृतः अपरिहिंसितः अपरिश्रान्त इत्यर्थः। किमिय। अत्यो न अश्व इव। कीदृशोऽश्वः। सप्तिः सदा सर्पणसमर्थः। यथा सत[त]गमनसमर्थोऽश्वः अपरिश्रान्तो गच्छति एवं सोऽ[य]मग्निरस्माभिराहूतो† यागार्थमिति पूर्ववद्वाक्यपरिसमाप्तिः कार्या।

ईशे यो विश्वस्या देववीतेरीशे विश्वायुरुपसो व्युष्टौ ।
आ यस्मिन्मना हवींष्यग्नावरिष्टरथः स्कभ्नाति शूषैः ॥३॥

ईशे यो वि०–गन्धश्चाग्निरीशेपु? ईष्टे। विश्वस्याः सर्वस्याः। देववीतेः देवाशनस्य हविषः। ईशे ईष्टे च। यः विश्वायुः सर्वत्राप्रतिहतगमनः सर्वजीविनो वा। उपसो व्युष्टौ विवासने। आदित्यात्मना स्थितस्सन्नग्निरुदयेनोपसं विवासयतीत्यतः एवमुच्यते। यस्मिश्चाहिंसिता यज्ञरथः असुरराक्षसादिशत्रुबलैः।

---

* अवोभिर्ज्येष्ठेभि इ० । † ०स्माभिहितो–कोषपाठः ।

शूपेभिर्वृधो जुषाणो अर्कैर्देवाँ अच्छा रघुपत्वा जिगाति ।
मन्द्रो होता स जुह्वा यजिष्ठः सम्मिश्लो अग्निरा जिघर्ति देवान् ॥४॥

शूपेभिर्वृ०-सोऽग्निरुक्तलक्षण शूपेभिर्बलैर्हविर्लक्षणै बलनिमि त्तैर्हविर्भिरित्यर्थ । वृध वर्धितस्सन् । जुषाण सेव्यमानश्च । अर्कै मन्त्रै यज्वभिस्तुतिभिरदशास्त्रैश्चेत्यर्थ । देवानच्छेन अच्छ आप्नु । रघुपत्वा लघुपतन शीघ्रगमन । जिगाति गच्छति । गत्वा चाह्वयानन्तर । मन्द्र * स्तुत्य । होता हामकारी । यजिष्ठ यष्टृतम । सम्मिश्ल सम्मिश्र सम्र युक्त सर्वैर्गुणैर्देवैर्वा । जुह्वाख्येन पात्रेण हविराजिघर्त्ति आक्षारयति । देवान् प्रति हवि दवेभ्यो ददातीत्यर्थ ।

तमुस्नामिन्द्रं न रेजमानमग्निं गीर्भिर्नमोभिरा कृणुध्वम् ।
आ यं विप्रासो मतिभिर्गृणन्ति जातवेदसं जुह्वं सहानाम् ॥५॥

तमुस्रामि०-जातवेदस जुह्वमाह्वातार दातार वा मनुष्यादि बलानाम् । अथवा सहाना शत्रूणामभिभवितॄणा सहायाना वा देवाना यागार्थमाह्वा तार । विप्रास मेधाविन स्तातार । मतिभि स्तुतिभि । आ गृणन्ति आदरेण स्तुवन्ति । तमग्निमुस्रा भोगानामुत्स्राविण दातार । रेजमान ज्वालात्मना कपमान वा प† इन्द्रमिव । गीर्भि स्तुतिभि । नमोभिरन्नैश्च । आ कृणुध्व अस्मदभिमुख यूयमपि कुरुत ह ऋत्विज ।

स यस्मिन्विश्वा वसूनि जग्मुर्वाजेनाश्वाः सप्तीवन्त एवैः ।
अस्मे ऊतीरिन्द्रवाततमा अर्वाचीना अग्न आ कृणुष्व ॥६॥

स यस्मिन् वि०-यस्मिंस्त्वय्यग्नौ स सगतानि स्वत्वनावस्थिता नीत्यर्थ । विश्वा सर्वाणि । वसूनि धनानि । वाजेन अन्नेन बलेन वा सह अश्वाश्च यस्मिंस्त्वय्यग्नौ स्वत्वेनावस्थिता । कादृशा अश्वा । सप्तीवन्त सर्पणवन्त सततगमनसमर्था इत्यर्थ । एवै कामैस्सर्वैस्सहिता । स त्व हे इन्द्र परमेश्वराग्ने । अस्मे अस्माकमर्थाय । ऊती कीदृशा वात तमा दुर्लभत्व गततमा । आतदुष्प्रापा इत्यर्थ । अर्वाचीना अर्वाग ञ्चना अस्मदभिमुखा । आ कृणुष्व आदरेण कुरु । सर्वान् कामानस्म भ्यम्देदीत्यर्थ ।

* मन्त्र शेषपाठ । † नेन्द्रमिव ?

अधा ह्यग्ने मह्ना निषद्या सद्यो जज्ञानो हव्यो बभूथ ।
तं ते देवासो अनु केतमायन्नधावर्धन्त प्रथमास ऊमाः ॥७॥

अधा ह्यग्ने०–अधेति हेतु निर्देशे। हीति प्रतिनिर्देशे। अथ यस्मात् हे अग्ने। महत्वेन स्वेन।निषद्य उपविश्य वेद्यन्ते। जज्ञानो जायमानःज्वलन्। सद्यः तस्यामेव वेलायां। हव्यः हवनार्हः आहुतिप्रक्षेपार्हः।बभूथ भवसि। हि तस्मात्। तन्ते तव। स्वभूतं केतं प्रज्ञानं ज्वालां। अनु आयन्न होमार्थः मनुगच्छन्ति दीप्ते त्वयि हवींषि जुह्वतीत्यर्थः। देवास- हविषो दातारः ऋत्विग्यजमानाः। अध अनन्तरं। वर्धन्त वर्धन्ते च पुत्रादिवृद्ध्या युज्यन्ते चेत्यर्थः। प्रथमासः क्रियाभिर्जनविद्यादिगुणैश्च भवन्तीति शेषः। ऊमाः त्वया रक्षितास्सन्तः।

सप्तमं सूक्तम् ।

स्वस्ति नो दिवो अग्ने पृथिव्या विश्वायुर्धेहि यजथाय देव ।
सचेमहि तव दस्म प्रकेतैरुरुष्या ण उरुभिर्देव शंसैः ॥१॥

स्वस्ति नो दि०–स्वस्ति अविनाशं अस्मभ्यन्दिवस्सकाशात्। पृथिव्याश्च। द्युपृथिव्यन्तरिक्षनिवासिभ्यस्सकाशादित्यर्थः। कीदृशं स्वस्ति उच्यते। विश्वायुः सर्वान्नसहितं। हे अग्ने देव धेहि। किमर्थं यजथाय देवयागार्थं। सर्वोपद्रवरहितास्सर्वान्नयुक्ताश्च सन्तस्तथास्मान् कुर्विति वाक्यार्थः।किञ्च सचेमहि सेवेमहि आराधयेम त्वां सदेत्येतदाशास्महे वयं।केन। उरुभिः बहुभिः।शंसैः स्तुतिभिः।एतज्ज्ञात्वा हे दस्म तव स्वभूतैः प्रज्ञानैरुरुष्य रक्ष पालनोपायपरिज्ञानैरुरुष्य रक्ष नोऽस्मान् ।

इमा अग्ने मतयस्तुभ्यं जाता गोभिरश्वैरभि गृणन्ति राधः ।
यदा ते मर्तोऽनु भोगमानड्वसो दधानो मतिभिः सुजात ॥२॥

इमा अग्ने०—हे अग्ने इमा मतयः स्तुतयः। तुभ्यन्त्वदर्थं जाताः [ अस्म ] दादिस्तोतृमुखादुत्पन्नाः। उच्चरिता इत्यर्थः। गोभिरश्वैश्च सहितं राधः धनं हिरण्यादिकमभिगृणन्ति। अभिष्टु-

वन्ति । अहो शोभनमस्मदनुरूपमिति प्रशंसन्ति । कदा उच्यते । यदा यस्मिन् काले । ते तव । स्वकं भोगं भोगार्हन्धनं मर्त्तोऽस्मदादिको मनुष्योऽन्वानट् त्वत्तो दानानन्तरं प्राप्नोति लभते तदेत्यर्थः । एतद् ज्ञात्वा हे वसो प्रशस्यवसुमन्धासयसुभूत वा स्वेन तेजसा सर्वस्याच्छादयितर्वा । सुजात सुजन्मन् शोभनकर्मार्थमुत्पन्न वा । दधानः अस्मभ्यन्ददद्धनं मतिभिः स्तुतिभिस्त्वया दत्तन्धनं स्थापयेति शेषः । अस्मत्स्तुत्यनुरूपमस्मभ्यन्धनं देहीत्याभिप्रायः ।

अग्निं मन्ये पितरमग्निमापिमग्निं भ्रातरं सदमित्सखायम् ।
अग्नेरनीकं बृहतः सपर्यं दिवि शुक्रं यजतं सूर्यस्य ॥३॥

अग्निं मन्ये०—अग्निमन्ये जानेऽहं । पितरं तत् कार्यकर्तृत्वादिनि उत्तरत्राप्ययमेव न्यायः । अग्निमेवापिश्च ज्ञातिं । अत्रोक्तव्यतिरिक्ताम्माभ्रादिकाम्मन्ये । अग्निमेव भ्रातरञ्च मन्ये । सदमित् सदैव । सर्वकालमेवा विसंवादिनं सखायञ्च मन्ये । अग्नेरग्नेः स्वभूतमनीकम्मुखमाहवनीयाख्यं । बृहतो महतः अनन्तगुणस्य । सपर्यं परिचराम्यभिमेतार्थसिद्धये स्तुतिभिर्हविर्भिश्चाराधयामि । किमिव दिवि शुक्रं यत्न ममेतद्दिविस्थं शुक्रं शोचिष्मद्दीतिमद्यजतं* यष्टव्यं मण्डलं सूर्यस्य संबन्धि यथाभिप्रेतार्थसिद्धये कश्चिदाराधयेत्येवम् ।

सिध्रा अग्ने धियो अस्मे सनुत्रीर्यं त्रायसे दम आ नित्यहोता ।
ऋतावा स रोहिदश्वः पुरुक्षुर्द्युभिरस्मा अहभिर्वाममस्तु ॥४॥

सिध्रा अग्ने०—हे अग्ने सिध्राः सिद्धा निष्पन्ना धियः प्रज्ञा कार्यास्तु । अस्मे अस्माकं संबन्धिन्यः । सनुत्रीः संभक्तयस्तव त्वदर्थमस्माभिः स्तुतयः कृता इति ज्ञापिनमित्यभिप्रायः । यम्मान्त्रायसे पालयसि कर्मवैगुण्यात् । यस्य मम कर्म सगुणं करोषीत्यर्थः । दम आ यज्ञ गृहे मर्यादयावस्थितः । नित्यहोता सततं होमकारी देवानामाह्वाता वा सन् । सोऽहन्तव प्रसादात्[त्]त्वत् सायुज्यं गतस्सन् । ऋतावा यज्ञवान् सत्यवानुदकवान् वा स्यामिति शेषः । रोहिदश्वो रोहित्संज्ञकाश्वावांश्च स्यां । पुरुक्षुर्बहन्नश्च यद्वस्तुतिशब्दश्च वा स्यां । किञ्च । द्युभिः दीप्तैः ।

* यजत-ऋग्वेदे दृश्यते ।

अहभिः अहोभिः सामर्थ्यात् कतिपयैरपि । अस्मै मह्यं । धामं वननीयं फलन्दद्यमदद्य वाऽस्तु ।

द्युभिर्हितं मित्रमिव प्रयोगं प्रत्नमृत्विजमध्वरस्य जारम् ।
बाहुभ्यामग्निमायवोऽजनन्त विक्षु होतारं न्यसादयन्त ॥५॥

द्युभिर्हितं०—यत्तदोरध्याहारः क्रियते पूर्वोत्तरयोर्मन्त्रयोः। यन्त्वामग्निं हितमित्रमिव प्रयोगं हितकारिणं स्निग्धमिव सर्वकार्येषु प्रयोक्तव्यं। प्रत्नं पुराणं ऋत्विजं। अग्निर्वै देवानां होतासीदिति वचनात्*। अथवा ऋतावृतौ देवानां यष्टारं। अध्वरस्य यज्ञस्य। जारं जरयितारं परिसमापयितारं। बाहुभ्यामायवो मनुष्या ऋत्विग्यजमानाऽह्लोभिश्च दिवसेष्वित्यर्थः। विक्षु विशो मनुष्यास्तदाकारेषु देवेष्वित्यर्थः। होतारं आह्वातारं। नि आसादयन्तो नियमेन सादितवन्तश्च देवानां यागार्थमाह्वातारन्निरूपितवन्तश्चेत्यर्थः।

स्वयं यजस्व दिवि देव देवान्किं ते पाकः कृणवदप्रचेताः ।
यथायज ऋतुभिर्देव देवानेवा यजस्व तन्वं सुजात ॥६॥

स्वयं यज०—स त्वं हे देवाग्ने आत्मनेव यजस्व। दिवि दीप्तिमति वेदिस्थाने स्थितान्देवान्मानुषहोत्रा? देवयागमाकार्षीः। यतस्ते तद संबन्धि देवयागकर्म किं कृणवत् करोति। पाकः पक्तव्यप्रज्ञः। अप्रचेताः अप्रज्ञानो मानुषो होता त्वयानधिष्ठितो न किञ्चिदपि जानातीत्यर्थः। किञ्च यथा येन प्रकारेणायजः यजसी त्वन्देव ऋतुभिः ऋतुदेवताभिः सह यागाकालैर्वा। देवान् एव एवं यजस्व। तन्वं स्वमात्मानमित्यर्थः। हे सुजात शोभन जन्मन् शोभन देवयागकर्मार्थमुत्पन्न वा।

भवा नो अग्नेऽवितोत गोपा भवा वयस्कृदुत नो वयोधाः ।
रास्वा च नः सुमहो हव्यदातिं त्रास्वोत नस्तन्वो अप्रयुच्छन् ॥७॥

भवा नो अ०—हे अग्ने नः अस्माकं। अविता भव दृष्टभयेभ्यो रक्षिता भूयास्त्वं। उत अपि च। गोपाः अदृष्टभयेभ्यो गोपिभूयाः भव। वयस्कृत् वयसान्न जीवितं वक्ष्यते। जीवितस्य च समग्रस्य कर्ता भूयाः।

* ऐतरेय ब्राह्मणम् ३। १४॥

उत नो वयोधाः वयसोऽन्नस्य च दाता भूयाः। रास्व च देहि च। देवेभ्यो नः अस्माकं स्वभूतां। हव्यदातिं हविषो दत्तिं। हे सुमहा सुष्ठु महन् सु पूजया* । त्रास्व पालय। उतापि नः अस्माकं स्वभूतास्तन्वः शरीराणि। अप्रयुच्छन् अप्रमाद्यन् ॥

अष्टमं सूक्तम् ।

उत्तरं सूक्तं प्रकेतुनेति नवर्चन्त्वाष्ट्रस्त्रिशिरा ददर्श। अस्याद्याभिष्षड्भि ऋग्भिरग्निन्तुष्टाव। आत्मनस्त्राणार्थमन्त्येन तृचेनेन्द्रमभितुष्टाव। स्वप्रान्ते ? किल अभवत्स हि देवानां पुरोधाः प्रियकाम्यया असुराणां स्वसुः पुत्रस्त्रिशिरा विश्वरूपधृक् तत्सं ददर्श। प्रहिन्विन्द्रो देवेषु विबुधैस्सुरैः सोऽस्य वज्रेण तान्याशु शिरांसि त्रीणि चिच्छिदे। तस्य यत् सोमपानन्तु मुखं सोऽभूत् कपिञ्जलः फलविकस्तुरापानमत्तादन्तित्तिरोऽभवत्। तं यागभ्यवदत्तीवा ब्रह्महासि शतक्रतो यपत्रं हतवान् यस्त्वं विश्वरूपं पराङ्मुखं तमभ्यषिञ्चत् सूक्तेन ऋषिराप इति स्वयं सिन्धुद्वीपोऽपनुत्यर्थन्तस्याश्लीलस्य पाप्मनाम्।

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
दिवश्चिदन्तां उपमां उदानळपामुपस्थे महिषो ववर्ध ॥१॥

प्र केतुना०—केतुना प्रज्ञानेन। बृहता महता सर्ववस्तुविषयेण युक्त इति शेषः। प्रयाति प्रगच्छत्यग्निः द्य आ रोदसी आङत्र मत्यर्थे द्यावापृथिव्यौ गत्वा वृषभ वृषभ इवारोरवीति। देवयागकाले। पृथिव्यामत्यर्थं शब्दं करोति देवाह्वानकाले। दिवि अन्तान् अवसानान्। उपमान् सन्निकृष्टांश्च प्रदेशान्। ज्वालात्मनादित्यात्मना वा स्थित। उदानट् ऊर्ध्वं व्याप्नोति ॥

मुमोद गर्भो वृषभः ककुद्मानस्रेमा वत्सः शिमीवां अरावीत् ।
स देवतात्युद्यतानि कृण्वन्त्स्वेषु क्षयेषु प्रथमो जिगाति ॥२॥

मुमोद ग०—या निर्मुमोद मोदते सततमाप्तकामत्वात् वृषभ इव च। ककुद्मानत्रिदिवद्रादित्यात्मना स्थित। आद्रवनीयाद्याधारमेघमण्डलैरभ्रतरव ? सामान्या वर्षिता। ककुद्मांश्च ज्वालाभिः तद्वदुन्नता-

* पूजया—कोषपाठ ।

भिः। अक्षेमा प्रशस्तश्च। वत्सश्च नक्तोषसोः। सायंप्रातराहुत्युपजीवनात्। उक्तश्चायमर्थो मन्त्रान्तरे–'नक्तोषासा समनसा विरूपे धापयेते शिशुमेकं समीची' इति।* शिमीवान् हविर्वेदनदेवाह्वानादिकर्मवांश्च। अरावीत् देवाह्वानादिशब्दं सप्रयोजनं करोति। सोऽग्निः देवताति। यज्ञे उद्यतानि उद्यमान् कर्मार्थमुत्साहान्। कृण्वन् कुर्वन्। स्वेष्वात्मीयेषु। क्षयेषु निवासेषु। आहवनीयाद्याधारेषु स्थितः। प्रथमः सर्वस्मादन्यस्माद्यागसाधनात् पूर्वं। जिगाति गच्छति। कर्म प्रति यागकर्मणि व्याप्रियत इत्यर्थः॥

आ यो मूर्धानं पित्रोररब्ध न्यध्वरे दधिरे सूरो अर्णः।
अस्य पत्मन्नरुषीरश्वबुध्ना ऋतस्य योनौ तन्वो जुषन्त ॥३॥

आ यो मूर्धा०–योऽग्निः। मूर्धानं मूर्धवत् प्रधानभूतमग्निनिर्मन्थनप्रदेशं। पित्रोः अग्नेर्मातापितृभूतयोररण्योरवयवं। आरब्ध आङीपदर्थौ रभिर्हिंसार्थ। ईषद्धिनस्ति। निर्मन्थनकाले दाहेन दग्धुं समर्थोऽपि सन्न दहतीत्यर्थः। यश्चाग्निमध्वरे यज्ञे। नि दधिरे नियमेन धारयन्ति यष्टारः। यश्चाग्निः सूरः सूर्योऽप्येकस्य सतः। अग्निविद्युदादित्यात्मनाग्नेरेवाभिधावस्थानात्। अर्णः अर्त्ता च गन्ता च। हविरादाय देवान् प्रति सर्वत्र वा। तस्यास्याग्नेः स्वभूतास्तन्वः मूर्त्तयः। अग्निविद्युदादित्यलक्षणा ज्वालालक्षणा वा। आहवनीयादिलक्षणा वा। कीदृश्यः। अरुषीरारोचनाः। अश्वबुध्नाः अशनबन्धनाः। हविराहारास्थि† इत्यर्थः। जुषन्त सेवन्ते भक्षयन्ति सर्वयजमानहवींषीत्यर्थः। क्वावस्थितास्सेवन्ते। उच्यते§। ऋतस्य यज्ञस्य संबन्धिनि योनौ स्थाने वेद्याख्ये। किंगुणविशिष्टे। पत्मन् पत्मनि पतन्ति गच्छन्ति उपविशन्त्यत्र देवता इति पत्म। तत्र देवतासने वेदिस्थान इत्यर्थः। अथवा तन्व इति द्वितीयान्तमेतत्। यथोक्ता मूर्तीस्सेवन्ते सर्वे यजमाना स्तुतिभिर्हविर्भिश्च॥

उषउषो हि वसो अग्रमेषि त्वं यमयोरभवो विभावा।
ऋताय सप्त दधिषे पदानि जनयन्मित्रं तन्वे स्वायै ॥४॥

उषउषो०–उष इति षष्ठ्यर्थसंबोधनविभक्तिरेषा। उषशब्देन चात्र सामर्थ्यात् सायंप्रातस्सन्ध्ये उच्येते। हे वसो स्वेन

* यजुः० १२।२॥ †।  § उच्यन्ते–कोशपाठः।

ज्योतिषा सर्वस्याच्छादयितः । वसुमन् वा सर्वस्य वसुभूत वा प्रशस्य वा अग्ने । उषः स सायंसन्ध्याया उषस प्रातस्सन्ध्यायाश्चाग्रं पूर्वं । हि यस्मात् । एषि गच्छसि विभ्रियमाण । त्वं यमयोरेकस्मादादित्यात् । तन्वे स्वायै । पञ्चम्यर्थे चतुर्थी । तन्व स्वाया स्वस्माच्छरीरात् ॥

भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वेषि ।
भुवो अपां नपाज्जातवेदो भुवो दूतो यस्य हव्यं जुजोषः ॥५॥

भुवश्चक्षुः०-भुवः भवसि । चक्षु । कस्य । महः महतः । ऋतस्य यज्ञस्य । गोपा गोपयिता च । भुव भवासि च । त्वमेव वरुणः आदित्यः । कदा । यत् यदा । ऋताय उदकार्थं भौमरसलक्षणस्योदकस्यादानार्थं पृथिवीं प्रति वेषि गच्छसि । तदा भुवः भवासि च । त्वमेवापां वृष्टिलक्षणानामपां । नपात् मेघः । कथं । अद्भ्यो हि मेघो जायते । मेघात्त्वं विद्युद्रूपो जायसे । हे जातवेदः भुवः भवसि च दूतस्त्वमेकस्य यस्य यजमानस्य हविर्जुजोषः सेवसे भक्षयासि तस्य ॥

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् ॥६॥

भुवो यज्ञ०-भुवः भवसि त्वं । यज्ञस्य रजसश्च । आदित्य जन्म ।
मूर्धा भुवो भवति नक्तमग्निस्ततस्सूर्यो जायते प्रातरुद्यन् ।*
स्तोमेन हि दिवि देवासो अग्निमजीजनञ्छक्तिभी रोदसिप्राम् ।
तमू अकृण्वन्त्रेधा भुवे कं स ओषधीः पचति विश्वरूपाः ॥† इत्यादिषु ।
भुवश्चक्षुर्मह ऋतस्य गोपा भुवो वरुणो यदृताय वे[षि] ।§
नेता प्रापयिता । इतो लोकान् । अग्निर्वा इतो वृष्टिं समीरयतीति श्रुतेः ।¶
क नेता । उच्यते । यत्र यस्मिन्नन्तरिक्षे लोके । नियुद्भिश्शिवाभिः । नियुत्संज्ञकाभिरश्वजातिभिस्सख्यादिभिस्संयद्धं वायुं । सचसे हविषोदकेन च सेवसे । तत्रान्तरिक्षे नेतासि । दिवि द्युलोके च । मूर्धानं शिरोवत् प्रधानभूतं । दधिषे हविर्नयनद्वारेण धारयासि । कं स्वर्षां स्वरिति

*ऋ० १० । ८८ । ६ ॥ †ऋ० १० । ८८ । १० ॥ §ऋ० १० । ८ । ५ ॥
¶निरुक्त ७ । २४ ॥ तै० स० २ । ४ । ९ । १० ॥ काठकस० ११ । १० ॥
मै० स० २ । ४ । ८ ॥ एभिरमह मत्रपनाम् ।

द्यौरुच्यते । दिवस्सनितारं संभक्तारमादित्यं । जिह्वास्थानीयाश्च ज्वालाः । हे अग्ने करोपि । हव्यवाहं हविषां वोढ़ीं ॥

अस्य त्रितः क्रतुना वव्रे अन्तरिच्छन्धीतिं पितुरेवैः परस्य ।
सचस्यमानः पित्रोरुपस्थे जामि ब्रुवाण आयुधानि वेति ॥७॥

* अत्रेतिहासः । त्रितमृषिमनुचरमिन्द्रः किलोवाच । आयुधानि वेत्सि त्वं । त्रिशिरसो वधे मे साहाय्यं कुर्विति । स एवमुक्तस्त्रितो यज्ञे भागं वव्रे स्ववीर्यवृद्ध्यर्थं । तस्मै पाणिप्रक्षालनार्थमुदकं यज्ञभागमिन्द्रो दत्तवान् । तेन यज्ञभागेन वृद्धवीर्यस्त्रित इन्द्रेण त्रिशिरसा सह युद्धातं ? हत्वा तस्य स्वभूता गाव आजहार । स पुनरुज्जीवितो बहुतरं बलं प्राप्येन्द्रमयोधयत् । तं वज्रेण निर्भिन्नवानिन्द्रस्सपराङ्मुखीकृतः । तस्य त्रीणि शिरांसि चिच्छेद वज्रेणेन्द्रः महान्तं शत्रुजयनिमित्तं सिंहनादं कुर्वन्निति । एतद् भावि वस्तु स्वप्नान्ते ऽनेन तृचेन ददर्श ।

यस्त्रैलोक्यस्याधिपतिः तस्यास्येन्द्रस्य । क्रतुना त्रिशिरसो मम वधे साहाय्यकरणकर्मणा निमित्तेन । एवैः कामैर्यज्ञभागेच्छाभिश्च चोद्यमानस्त्रित ऋषिरिन्द्रस्य सखा । वव्रे वृतवान् प्रार्थितवान् किल स्वप्नान्ते । अन्तर्मध्ये । कस्य सामर्थ्यायज्ञस्य । इच्छन्धीतिं वर्त्ति भागं । कुत इच्छन् । पितुः सर्वस्य जगतः पातु । परस्य प्रकृष्टस्येन्द्रस्य सकाशात् । लब्धेन च तेन यज्ञभागेन णेन ? । सचस्यमानः सेव्यमानस्सर्वयजमानैः । पित्रोः सर्वस्य मातापितृभूतयोर्द्यावापृथिव्योः । उपस्थे समीपे सामर्थ्यायज्ञे । जामि योग्यमिन्द्रस्यानुरूपं सामर्थ्यात् ॥ किञ्चान्यत्—

स पित्र्याण्यायुधानि विद्वानिन्द्रेषित आप्त्यो अभ्ययुध्यत् ।†
त्रिशीर्षाणं सप्तरश्मिं जघन्वान्त्वाष्ट्रस्य चिन्निः ससृजे त्रितो गाः ८

मया स्वप्ने दृष्टस्स एव पूर्वोक्तस्त्रितः । पित्र्याणि पितात्र किलाग्निरुच्यते । सर्वस्य स तानि पित्र्याण्याग्नेयान्यायुधानि । विद्वान्

* इतोऽग्रे कोपप्रदत्तमन्त्रप्रतीकानि नोद्धृतान्यस्माभिः ।

† अयं मन्त्रः कोषे प्रतीकेन नोदाहृत. ।

शत्रुवधाय प्रयोक्तुं सर्वं हन्तुश्च जानन् । इन्द्रेषित इन्द्रेण त्रिशिरसा सह युद्धार्थं प्रेषितस्सन् । आप्त्यः अप्तः पुत्रः । अभि अयुध्यत् आभिमुख्येन युद्धं संप्रहृतवान् किल । त्रिशीर्षाणं त्रिशिरसं मां। सप्त-रश्मीन् शत्रुनिय[मन]र्थं सप्त प्रग्रहहस्तं । अथवा सप्त रश्मिरा-दित्यः। तत्सदृशं। क रश्मिवज्जिमथित? सप्तच्छन्दस्कं वाभियुद्धय च। जघन्वान् हतवान् किल । सामर्थ्यात् समूर्च्छितं कृतवानित्यर्थः । कृत्वा च त्वाष्ट्रस्य चित् । चिदप्यर्थे । त्वष्टुः पुत्रस्य मम चाप्यस्य वासुरस्य स्वभूता गाः निस्ससृजे नि[सृष्ट]वान् किल निष्कालि-तवानित्यर्थः ॥

भूरीदिन्द्र उदिनक्षन्तमोजोऽवाभिनत्सत्पतिर्मन्यमानम् ।
त्वाष्ट्रस्य चिद्विश्वरूपस्य गोनामाचक्राणस्त्रीणि शीर्षा परा वर्क् ॥९॥

समूर्च्छेय संज्ञां प्रतिलभ्य उत्थाय युद्धार्थं । भूरि इत बहिव पूर्वतुल्यमतिरिक्तत्वेत्यर्थः [ ०रिक्तं वेत्य० ?] । ओजः बलं । इनक्षन्तं व्याप्नुवन्तं कुर्वन्तमित्यर्थः । मन्यमानं शूरं वलवन्तं वात्मानाश्चिन्त यन्तं । अथवा मन्यतिर्दीसिकर्मा क्रोधकर्मा वा । दीप्यमानं क्रुध्यन्तं वा । अथवा मन्यत इत्यर्चन्तिकर्मसु पाठात् ।* इन्द्रं स्तुवन्तं मां त्वाष्ट्रं । सत्पतिः सतां पाता शोभनो वा त्रैलोक्यस्य स्वामी । अवाभिनत् वज्रेण विदारितवान् किल । विदार्य च । त्वाष्ट्रस्य चित् । चिच्छब्दः किलार्थे । त्वष्टुः पुत्रस्य मम किल विश्वरूपस्य । गोनां गवां स्वामिन इति शेषः । आचक्राणः आकारादिशब्दं कुर्वि-त्यर्थः । त्रीणि शीर्षाणि शिरांसि । परा वर्क् पराङ्मुखस्य वृक्णवान् किल। ईदृशं भावि वस्तु स्वप्नान्ते दृष्टवानेनेन वचेन विश्वरूप. ॥

एतस्मिन्नथ वस्तुनि यं† भूते सति इन्द्रस्य ब्रह्महत्यापनोदनमुत्तरं सूक्तमापो हि ष्ठेत्यब्देवत्यं खैलिकया सह दशर्चं त्वाष्ट्रस्त्रिशिरा आंवरीषस्सिन्धुद्वीपो वा ददर्श ॥

नवमं सूक्तम् ।

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥१॥

* निघण्टु ३ । ४ ॥ †०मुत्तम-शोधपाठः ।

या यूयं स्नानपानसम्यग्[क्]करणादिनाप्रकारेण सर्वस्य जगतः । मयोभुव स्थ सुखस्य भावयित्र्यो भवथ । ता न· अस्मान् । ऊर्जे अन्नाय । दधातन धत्त । अन्नप्राप्तियोग्यानस्मान् कुरुत । अन्नमस्मभ्यन्दत्तेत्यर्थ । महे महते च । रणाय रमणीयाय । चक्षसे दर्शनाय । ज्ञानाय ज्ञान-प्राप्तियोग्यान्चास्मान् कुरुतेत्यर्थः । महत्त्वं ज्ञानस्य सर्वविषयत्वात् स्वर्गापवर्गरमणीयफलप्राप्तिश्च रमणीयत्वं ज्ञानस्य ॥

यो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः ॥२॥

यः । वः युष्माकं स्वभूत । शिवतमः अतिशयेन शिवः सुख[ तमः ] । रस· गुणो मृष्टः स्वादुर्बलारोग्यकरश्च । तस्य रसस्यैकदेशं तं वा रसं । भाजयत सेवयत । न· [अस्मान् । इह] अस्मिन् लोके । किमिव । उशतीः इव मातर· । यथा उशतीः कामयमाना स्तन्यं रसं मातरः पेरण हार्द्देन युक्ता ॥

तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ ।

आपो जनयथा च नः ॥ ३ ॥

तस्मै पापाय शत्रवे वा तस्य पापस्य शत्रोर्वार्थाय यस्य पापस्य शत्रोर्वार्थाय विनाशाय । जिन्वथ प्रीणयथ । तस्य यथा हे आपः [ पुत्रपौ]त्रादिवृद्धिजनेन प्रयोजयथेत्यर्थः । न· अस्मान् ॥

शन्नो देवीरभिष्टय आपो भवन्तु पीतये ।

शं योरभि स्रवन्तु नः ॥ ४ ॥

शं सुखं । नः अस्माकं । भवन्तु पापापनोदनद्वारेण । देवीरापः । अभिष्टये अभ्येषणाय च । भवन्तु प्रार्थितमर्थं यच्छन्तु चेत्यर्थः । अथवा अभिष्टये यागाय च यज्ञांगभावाय भवन्त्वित्यर्थः । पीतये पानाय च भवन्तु । स्नानपानादिक्रियाभिर्निर्वृत्तये चाव्यवच्छेदेन भवन्त्वित्यर्थः । किञ्च शं शमनमुत्पन्नानां रोगाणामुपशमश्च । योः यावनञ्च पृथग्भावमनुत्पन्नानां भयानामपनयञ्च कुर्वन्त्व[न्तु]इति शेषः । न अस्माकं । अभि उपरि । स्रवन्तु पावनार्थं सिच्यमानाः ।

ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् । अपो याचामि भेषजम् ॥५॥

ईशाना ईश्वराः । वार्याणां वारिप्रभवानां व्रीहियवादीनां

वरणीयानां । क्षयन्तीः ईश्वरानियासयित्रीर्वा विशिष्टां गतिं गमयित्रीर्वेति । चर्षणीनां मनुष्याणां । अपद्‌ [ अप्सु ? ] याचामि भेषजं । भेषजमिति सुखनामव्याधेः।* पापस्य वापनोदकं वस्तु । तदहं प्रार्थये ॥

सस्रुषीस्तदपसो दिवा नक्तश्च सस्रुषीः ।
वरेण्यक्रतूरहमा देवीरवसे हुवे ॥§

अब्देवत्या चै [ वै ]लिक्येषा । सस्रर्षी श्रवणशीलः निम्नानुसारिण्यि. तदपस. । तदेव स्रवणशीलत्वं निम्नानुसारित्वमपः कर्म या सान्ताः । दिवा नक्तश्च अहनि रात्रौ च सस्रर्षीः । वरेण्यक्रतुः स्नानपानपावनादिवरणीयकर्माणः अहन्देवीरपः । आहुवे आह्वयामि । अवसे आत्मनो रक्षणार्थं तर्पणार्थं वा ॥

दशमं सूक्तम् ।

उत्तरं यमयम्योः संवादसूक्तम्।ओचिदिति चतुर्दशर्च्चम्।संवादेषु तु सर्वेषु स ऋषिर्यस्य वाक्यं । तत उच्यते तेन वाक्येन यस्य स्याद्देवता तत्र । अत्रेतिहासमाचक्षते । यमी किल यमं समुद्रस्य मध्ये कश्चिद्वान्तरद्वीपं रम्यं रमणाय नीत्वा कामितवती । स च यमस्तां भगिनीत्वात् प्रत्याख्यातवानिति ।

ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ १ ॥

यमीवचनमेतत् । ओ इत्ययन्निपात आङुपसर्गस्यार्थे । ववृत्यामित्यनेन च क्रियापदेन संबध्यते । चिन्निपातः पूजार्थे । चित् पूजितमिष्टं श्रेष्ठं वेत्यर्थः । सखायं गर्भवासादारभ्य सखीभूतं यमं । सख्या सख्याय स्त्रीपुरुषसंपर्कजनितमित्रत्वायेत्यर्थ. । ओ ववृत्यां आवर्त्तयामि । आभिमुख्येन स्थित्वा लज्जां परित्यज्य संभोगं करोमीत्यर्थः । तिरः अन्तर्हितं अन्यजनाप्रकाशं विजनं । पुरु चित् बहु विस्तीर्णञ्च-

---

* निघण्टु ३।६॥ † इतोऽग्रे ये सन्ति चत्वारो मन्त्रा, न ते अत्र व्याख्याता । प्रथमे मण्डले १।२३।२०–२३॥ व्याख्यातत्वात् । यद्यपि उद्गीथाचार्येण अनेन कोपानुसारेण एव नात्र स्पष्टीकृत तथापि सूक्तस्यास्य दशर्चात्मकत्वस्वीकरणात् इदमेव ज्ञायते । § सप्तमो ऽयं मन्त्रः कोषे लिखितः । न तु प्रतीकमात्रेण ।

त्यर्थः । अर्णवं समुद्रैकदेशं अवान्तरद्वीपं । जगन्वान् गतवती सती । [ धर्मस्य ] त्वरिता गतिरित्यनेन न्यायेन । कामस्यापि त्वरितगतित्वात् । अपि च भविष्यतः पुत्रस्य पितुस्तवार्थाय । नपातं अपत्यं गर्भलक्षणं । कीदृशं । प्रतरं सर्वगुणोपेतमित्यर्थः । आ दधीत दध ? विधाता गर्भाधाने हि तस्याधिकार इत्येवमुच्यते । उक्तञ्च मन्त्रान्तरे गर्भाधानादित्वं—

विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भन्दधातु ते ॥* इति

क आ दधातु । उच्यते । अधि क्षमि अधि पृथिव्यां मातुरुपरि उदर इत्यर्थः । किं कुर्वन्नादधातु । गर्भे दंपती इत्यावयोरनुरूपतामावयोरनुरूपस्यापत्यजननार्थं इत्यर्थं संबन्धं करोत्वित्यर्थः ।

न ते सखा सख्यं वष्ट्येतत्सलक्ष्मा यद्विषुरूपा भवाति ।
महस्पुत्रासो असुरस्य वीरा दिवो धर्तार उर्विया परि ख्यन् ॥२॥

यम्यैवमुक्ते सात्मानं परोक्षी† इत्यर्थः । ते तव यम्याः । न सखा न गर्भवासलक्षणेन सखीभूतो यमः । सख्यं सखित्वं यत्त्वयोक्तं स्त्रीपुरुषसंपर्कलक्षणम् । एतन्न वष्टि न कामयते नेच्छति । कस्मात् कारणात् । यत् यस्मात् । सलक्ष्मा समानलक्षणा एकयोनिजत्वलक्षणा । विषुरूपा भगिनी सख्यं वष्टि एतत्सलक्षणा यद्विपुरूपा च । भवाति भवति यमी भवति । समानयोनिजत्वाद्यस्मान्मे भगिनी भवसि त्वं तस्मात्त्वान्न कामयेऽहमित्यर्थः ॥

ओचित् सखायं सख्या ववृत्यां पितुर्नपातमादधीत वेधा अधि क्षमि प्रतरन्दीध्यान इत्यनयोर्वचनयोर्युक्तं प्रतिवचनं-न ते सख्यादयः लोकपालाः । कीदृशा वीराः । 'वीरो वीरयत्यमित्रान् वेतेर्वा स्याद्गतिकर्मणो वीरयतेर्वा'‡ इति निर्वचनाद्विविधमीरयितारश्शत्रूणाम् । उरु विस्तीर्णं विजनञ्चावान्तरद्वीपं गूढसंभोगस्थानं त्वयाभिप्रेतं । परिख्यन् सर्वतः अव्यवधानेन पश्यन्ति । तस्मादत्र न कश्चिद्दुष्करं क्रियमाणं पश्यतीत्येतन्मामंस्थास्त्वं । उक्तञ्च मनुना—

*ऋ० १०।१८४।२॥ † 'यम आत्मान परोक्षीइत्य यमीं प्रत्युवाच' इति सायणः । ‡ निरुक्त १ । ७ ॥

मन्यन्ते वै पापकृतो न कश्चित् पश्यतीति नः ।
तांश्च देवाः प्रपश्यन्ति स्वश्चैवान्तरपूरुषः ॥* इति

एवं प्रत्याख्यायती प्रत्युवाच यमी ।

उशन्ति घा ते अमृतास एतदेकस्य चित्त्यजसं मर्त्यस्य ।
नि ते मनो मनसि धाय्यस्मे जन्युः पतिस्तन्व१मा विविश्याः ॥३॥

घेति निपातोऽप्यर्थेऽत्र । ये अमृतासः देवा प्रजापत्यादयः तेऽप्युशन्ति । कामयन्ते । यदगम्यत्वेन त्वयाभिप्रेतं । एतत् त्यजसं त्यज्यते परस्मै प्रदीयत इति । त्यजसं दुहितृभगिन्यादिस्त्रीजातं शास्त्रेणागम्यत्वेनोक्तं । एकस्य चिन्मर्त्यस्य । एकस्यापि मनुष्यस्य प्रजापत्यादेर्दुहितृत्वभगिनीत्वादित्वेन संबन्धि दुहितृत्वभगिनीत्वादिना संबन्धेन स्वसंबन्ध्यपि सदित्यर्थः । यतः प्रजापत्यादयोऽपि देवा स्वदुहितृभगिन्यादिस्त्रीजातन्त्यजसं विशेषेण कामयन्ते । अतः ते तव यमस्य । मनः मनसि । अस्मे अस्माकं संबन्धिनि । नि धायि निधीयतां । मम चित्तमनुचित्तन्ते अस्तु । अहन्त्वां कामये त्वं मामपि कामयस्वेत्यर्थः । जन्युः जन्युरिति लुप्तोपमं । जन्युरिव । यथा जनयिता प्रजापतिः पतिर्भूत्वा स्वदुहितृस्तन्वमाविष्टवान् सम्भोगेन । एवन्त्वमपि पतिर्भूत्वा मम तन्वं शरीरं सम्भोगेना विविश्या । वि आशये आह—

न यत्पुरा चकृमा कद्ध नूनमृता वदन्तो अनृतं रपेम ।
गन्धर्वो अप्स्वप्या च योषा सा नो नाभिः परमं जामि तन्नौ ॥४॥

यदगम्यागमनं पुरा पूर्वं प्रजापतिः कृतवान् । तेजोविशेषणयुक्तत्वात् । वयं न चकृम न कुर्मः । अपरदौर्बल्यात् । कच्छब्दः कदेत्यस्यार्थे । कद्ध नूनं कथमिप्रियं इति यथाह । निपातो वा । निपातार्थे नूनमिति । पदपूरणो निश्चयार्थो वा । निश्चयेन । ऋता ऋतं सत्यं वदन्तो ब्रुवन्तस्सन्त । अनृतमसत्यं । रपेम वदेम । उदितवन्तो वयं न कदाचिदपीत्यर्थः । अगम्यागमनं न कुर्म इति निश्चितमेतत् । नानृतं ब्रूम इत्यभिप्रायः । किञ्च गन्धर्वः गवां रश्मिनामुदकानां वा रश्मिभि-

---

* मनुस्मृतिः ८ । ८६ ॥ महमोक्षमूलरप्रकाशिते सायणीये ऋग्वेदभाष्ये अस्य मन्त्रस्यातिमपदद्वयस्य व्याख्यानं नोपलभ्यते । † ऋ० ८।७३।११॥

राहृतानां मण्डले धारयितादित्यः । अप्सु । आप इत्यन्तरिक्षनाम ।* अन्तरिक्षे आकाशे स्थित इति शेषः । सप्तमी श्रुतेः । अप्या अद्भिः संस्कृता अप्पूर्वन्दत्ता इत्यर्थः । योषा च स्त्री सरण्यूश्च त्वष्टुर्दुहितेत्यर्थः । सा नः । द्विवचनस्य स्थाने व्यत्ययेनेदं बहुवचनं । नौ आवयोः। नाभिर्हननं तदुभयमावयोर्बन्धनं शरीरसंहननेन हेतुस्तावावयोर्मातापित्री इत्यर्थः । ततः किमुच्यते । परममुत्कृष्टमुभयकुलविशुद्धं । तत् । जामि जन्माभिजने । नौ आवयोः । अभिजनवताञ्चागम्यागमनमनन्यरूपत्वादयुक्तं कर्तुं । तस्मादेतद्य करोमीत्यभिप्रायः ॥ एवं यमेन प्रत्याख्याता सती यमी पुनराहोत्तराभिरनन्तराभिस्तिसृभिः ॥

गर्भे नु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः ।
नकिरस्य प्र मिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौः ॥५॥

नु निपात एवार्थे । एव । गर्भावस्थायामेवेत्यर्थः । [नौ] आवां । दंपती जायापती । कः कृतवान् । एकोदरे सहवासस्य तत् कृतत्वात् । जनिता सर्वस्य जनयिता । देवस्त्वष्टा प्रजापतिः । सविता सर्वस्य प्रसविता शुभाशुभस्याभ्यनुज्ञातेत्यर्थः । विश्वरूपः सर्वात्मक इत्यर्थः। यत एवमतः नकिः न केचित् । प्र मिनन्ति प्रहिंसन्ति लोपयन्ति । अस्य प्रजापतेर्व्रतानि कर्माणि यद्[ने]नेद प्रजापतिना कृतं शुभमशुभं वा तत् प्रमाणमवश्यकर्त्तव्यं । तस्माद् गर्भावस्थायामेवावयोः प्रजापतिकृते दंपतित्वे सति संभोगं कुर्वित्यभिप्रायः । किञ्च वेद जानाति। नौ आवयोः । अस्य द्वितीयार्थे षष्ठ्येषा। इदं दंपतित्वं मातुरुदरे सहवासजनितं पृथिवी उत अपि द्यौः त्रयोऽपि लोकाः जानन्ति। नैतद् गूहितुं शक्यत इत्यभिप्रायः ॥

को अस्य वेद प्रथमस्याह्नः क ईं ददर्श क इह प्र वोचत् ।
बृहन्मित्रस्य वरुणस्य धाम कदु ब्रव आहनो वीच्या नॄन् ॥६॥

को वेद। को जानाति अनुमानेन। अस्य एतत् । द्वितीयास्थाने व्यत्ययेन षष्ठ्येषा । एतदगम्यागमनं । प्रथमस्याह्नः संबन्धि । प्रथमेऽहनि यत् क्रियते तदनुमानमाश्रित्य न कश्चिदपि ज्ञातुं शक्नोतीत्यर्थः।

* निघण्टु १।३॥

क ईं को वा । ददर्श प्रत्यक्षतः पश्यति । न कश्चिदपीत्यर्थः । अथ दृष्टं कथञ्चिदेतेन केनचिदावाभ्यां क्रियमाणमथनन्तत्* । क. । इह लोके । प्र वोचत् प्रब्रवीति प्रख्यापयति । न कश्चिदपीत्यर्थ । अथ मित्रावरुणौ जानीतः- पश्यतः । यत् बृहन्महत् । मित्रस्य वरुणस्य च । धाम जन्म अभिजनः । अभिजनवतां वा कत्वं परव्यसनं प्रत्ययुक्तमिति प्रज्ञातेनापि प्रत्यक्षतः पश्यति ।,अथ दृष्टं कथञ्चिच्चापि प्रत्याख्यापयतः इत्यभिप्रायः । एवमवस्थिते वस्तुनि । कदु ब्रव. । कच्छन्दोऽत्र किं शब्दार्थे । उ शब्दश्च वा शब्दार्थे । किं वा ब्रवीषि त्वं । हे आहनः । आहन्तः मर्यादया हिंसित । वीच्यादिनरकेण नॄन् मनुष्यान् स्वकृत-शुभाशुभकर्मापेक्षया मनुष्यादिप्राणिनां नरकपातनेन स्वर्गप्रापणेन वा निग्रहानुग्रहयोः कर्त्तारित्यर्थः । यत एवमेतौ निर्विचार ॥

यमस्य मा यम्यं१ काम आगन्त्समाने योनौ सहशेय्याय ।
जायेव पत्ये तन्वं रिरिच्यां वि चिद्वृहेव रथ्येव चक्रा ॥ ७ ॥

यमस्य तव । काम इच्छा । मां मयि यम्यां यमीं प्रति । आ अगन् आगच्छतु । ममोपरि तव यमस्य संभोगेच्छा जायतामित्यर्थ । किमर्थं उच्यते । समाने एकशब्दपर्यायोऽत्र समानशब्दः । समान-वन्धू समानस्सन्तुभौ लोकावनुसञ्चरतीति च यथा समान एकस्मिन् योनौ संभोगस्थाने शय्याख्ये । सहशेय्याय सह शयनाय । अनन्तरञ्च पूर्णमनोरथा सती । जाया इव पत्ये । यथा भार्या पत्युरर्थाय परया प्रीयोगाद्दीस्रब्धा सती स्वं शरीरं रतिकाले प्रकाशयति । एवं तन्वं शरीरमात्मीयं रिरिच्यां ।[संभोगा]दिकाले तवाहं प्रकाशयेयमित्यर्थः । किञ्च । विचित् । वृहेव । चिन्निपात पदपूरण. । वि वृहेव वृह् उद्यमने । धर्मार्थकामान् विविधमुद्यच्छायः । यवसधानुष्ठानेनोपक्षिपाव इत्यर्थ । किमिव । रथ्या इव चक्रा । यथा रथस्यावयवभूते चक्रे रथमुत् क्षिपतः ? ॥

---

*०माणमथानन्तर ?
†एवमतौ ।

एवं यम आहोत्तराभिस्तिसृभिरनन्तराभिः ॥

न तिष्ठन्ति न निमिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा ॥ ८ ॥

एतत् त्वया न मन्तव्यं न कश्चित् पश्यतीति । न क्षणमात्रमपि चरव्यापारविरहितास्तिष्ठन्ति । न च नि मिषन्ति । प्रमादरहिताः प्रयतो न । यो यत् करोति शुभमशुभं वा तत् सततन्निरीक्षन्ते चेत्यर्थः । एते देवानां स्वभूताः स्पशः चराः । अहश्च रात्रिश्चोभे[च] सन्ध्ये इत्येवमादयो मनुना निर्दिष्टाः । इह लोके ये चरन्ति । इतश्चेतश्च कृताकृतप्रत्यवेक्षणार्थमापरिभ्रमन्ते । एतज् ज्ञात्वा मया सह प्रच्छन्नपापकरणचिन्तां परित्यज्य । मन् मत्तः । अन्येन त्वदनुरूपेण । आहनः असभ्यभाषणेन ममाहन्ति दुःखयित्रि । याहि मैथुनं गच्छ । तूयं क्षिप्रं । गत्वा च तेन सह वि वृह उद्यच्छ असन्नानुष्ठानोत्क्षिप धर्मार्थकामान् । किमिव । रथ्या इव चक्रा । यथा रथस्यावयवभूते चक्रे रथमुद्यच्छतः एवं । किञ्च ॥

रात्रीभिरस्मा अहभिर्दशस्येत्सूर्यस्य चक्षुर्मुहुरुन्मिमीयात् ।
दिवा पृथिव्या मिथुना सबन्धू यमीर्यमस्य विभृयादजामि ॥९॥

'स्पशः सामान्येनोक्ता' । विशेषत उच्यन्ते । रात्रीभिस्सह अहोभिश्च सह दिवा च सह पृथिव्या नेह्वियुक्तौ ? उभौ सन्ध्याकालौ समानबन्धू । समान एको बन्धुर्ज्ञातिरादित्यो जनकत्वादायोः* ताभ्याञ्च सह । अस्मै लोकाय शुभाशुभकारिणे । दशस्ये[त्] दाश्येत् दाशति ददाति । कः सामर्थ्याल्लोकपालजनाः । किं ददाति सामर्थ्यात् कृताकृत प्रत्यवेक्षणार्थं दृष्टिं सूर्यस्य च संबन्धि चक्षुः । मुहुरुन्मिमीयात् । प्रतिक्षणमुन्मिनोतिचोत्करोति न परिच्छिन्नत्तीत्यर्थः । एतज् ज्ञात्वा यमी विभृयात् । यमीं धारयतु पतित्वे परिगृह्णात्वित्यर्थः । कं । यमस्य मम । अजामि अभ्रातरमित्यर्थः । एतदुक्तं भवति अहं तावदयोग्य एव पतित्वेन परिग्रहीतुं । तव भ्रातृत्वात् । योऽपि मया भ्रातृत्वेनाभ्युपगतः सोऽप्ययोग्य इत्यभिप्रायः । किं च ॥

---

*दनयोः ?

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥ १० ॥

घेति पदपूरणो निपातः । आ गच्छान् । आगमिष्यन्ति । ता तानि । उत्तरा उत्तराणि । युगानि कालाः । कलियुगान्ते । नेदानीं वर्त्तन्त इत्यभिप्रायः । यत्र येषु कालेषु । जामयः भगिन्यः । कृणवन् करिष्यन्ति । अजामि जामि भर्तृत्वेन नास्ति यस्य तद् जामि भगिन्या अयोग्यं मैथुनलक्षणं कर्म । एतज्ज्ञात्वा उप बर्बृहि विभक्तेर्मकारस्य छान्दसोऽयं बकारः । शय्यास्तस्य समीपे धार[य] बाहुमात्मीयं वृषभाय यस्त्वयोनौ रेतो वर्षति तस्यार्थाय । तं परिष्वक्तुमित्यर्थः । तश्चान्यमिच्छस्व कामयस्व । हे सुभगे पतिं मन्मत्तः । अहमयोग्यस्तव भ्रातृत्वादित्यर्थ ॥

यम्याह—

किं भ्रातासद्यदनाथं भवाति किमु स्वसा यन्निर्ऋतिर्निगच्छात् ।
काममूता बह्वे३ तद्रपामि तन्वा मे तन्वं१ सं पिपृग्धि ॥ ११ ॥

सा लुप्तसप्तमीविभक्तिका । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । किं स भ्राता । असत् भवति न भवतीत्यभिप्रायः । यत् यस्यां भगिन्यां सत्यां भ्रातरं निर्ऋतिर्दुःखस्निगच्छात् नियमेन गच्छति प्राप्नोति । भ्रातृभगिन्योश्च परस्परः प्रीतिर्येन केनचिदुपायेनावश्यं कार्येत्यभिप्रायः । काममूता काममोहिता सती । अथवा मूङ् बन्धने । कामेन बद्धा गृहीता वशीकृता सती । बहु नाना प्रलपामि । एतज्ज्ञात्वा तन्वा स्वशरीरेण । मे मम । तनुं शरीरं । सं पिपृग्धि संपर्चय संभोगेन संश्लेषय संभुङ्क्ष्व मामित्यर्थः ॥

यम आह—

न वा उ ते तन्वा तन्वं१सं पपृच्यां पापामाहुर्यः स्वसारं निगच्छात् ।
अन्येन मत्प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत् ॥ १२ ॥

न वै । वै निपात एवार्थे । उ निपातः पदपूरणः । न वै [नैव] ते तव । तन्वा शरीरेण । तन्वं शरीरं आत्मीयं । सं पपृच्यां सम्पर्चयामि । संभोगेन संश्लेषयामि । नैवाहं त्वां संभोक्तुमिच्छामीत्यर्थः ।

कस्मात् कारणात् । यतः पापं पापकारिणं तं पुरुषमाहुः वदन्ति शिष्टाः । यः स्वसारं भगिनीन्निगच्छात् नियमेनोपगच्छति संभुंक्त इत्यर्थः । एतज्ज्ञात्वा मन्मत्तः । अन्येन अन्यतरेण त्वद्योग्येन पुरुषेण सह । प्रमुद. प्रहर्षान् संभोगलक्षणान् । कल्पयस्व समर्थय निचर्थयेत्यर्थः । ते तव भ्राता हे सुभगे । न वष्टि न कामयते नेच्छति कर्त्तुं । एतन्मैथुनं । त्वया सह नेच्छामीत्यर्थः ॥

वतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम् ॥१३॥

यमी यमं कामयमाना तेन प्रत्याख्याता सती सेर्ष्यन्तमाह—

वत इति निपातः खेदानुकंपयोः । वतः खिन्नो दुर्बलः । वत अनुकंप्यश्चासि । भवसि त्वं हे यम ! न एव शब्दस्समुच्चये । न च ते तव । मनः मनोगतं संकल्पमित्यर्थः । हृदयञ्च बुद्धिगतमद्ध्यवसायञ्चेत्यर्थः । अविदाम विजानीमः । केन कारणेन । दुर्बल इति अथवा ज्ञातन्तव दौर्बल्यकारणं । किमुच्यते । मत्तः अन्या काचित् स्त्री किल त्वां शय्यागतं रतिकाले । परि ष्वजाते परिष्वंक्ष्यते । किमिव । कक्ष्या इव युक्तं । यथा कक्ष्या रज्जुरात्मना युक्तं संवद्धं गाढमश्वं परिष्वजते । एवं लिबुजा इव वृक्षं । यथा च लिबुजा वल्ली वृक्षे गाढं परिष्वजते तद्वच । अन्यस्यां कस्यामपि स्त्रियामासक्तत्वात् दुर्वलोऽसि । अत एव च मां परिष्वक्तुन्नेच्छसीत्यभिप्रायः ॥

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम् ।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम् ॥१४॥

सेर्ष्यमेवमुक्तं यमः प्रत्याचक्षाणः प्रत्युवाच । अन्यम् उ सु । उ शब्द एव शब्दार्थे । सुशब्दोऽभिपूजितार्थे । अन्यमेवाभिपूजितं कश्चित्त्वद्योग्यं पुरुषञ्च हयमिव परिष्वंक्ष्यसे । लिबुजेव वृक्षं वृततरिव वृक्षं न मां भ्रातृत्वकारणेनायोग्यत्वाद् । अन्य उ अन्यश्च त्वद्योग्य एव त्वां परिष्वजाते परिष्वंक्ष्यते । नाहं परिष्वजे भ्रातृत्वात् । तस्य वा । वा शब्दस्समुच्चयार्थे । तस्य च त्वद्योग्यस्य मनश्चित्तमात्मीयमिच्छ वशीकर्त्तुमिति शेषः । तस्य च त्वं वशवर्त्तिनी भवेत्यर्थ. । सत्या तव स च पुरुषस्तव वशवर्त्ती भवत्वित्यनुवर्त्तते । अध अथ

परस्परवशं कृणुष्व कुरुते । न सह संविदं परस्परसंभेगसुख-संविंस्ति । सुभद्रां सु कल्याणीं । इहलोकपरलोकाविरोधिनीमित्यर्थः ॥

॥ एकादश सूक्तम् ॥

वृषा वृष्णे दुदुहे दोहसा दिवः पयांसि यह्वो अदितेरदाभ्यः ।
विश्वं स वेद वरुणो यथा धिया स यज्ञियो यजतु यज्ञियाँ ऋतून् ॥१॥

वृषा वर्षिका आहुत्याधारत्वेन प्रणाधिकया वृष्टेर्दाता अग्निः । वृष्णे यज्ञद्वारेण स्तुतीनां हविषां वृष्टेश्च वर्षितुर्यजमानस्यार्थाय । दुदुहे दोग्धि पूरयति प्रक्षारयति । कथं । दोहसा दोहनेन महता प्रक्षारणेन । कुतः । दिवः सकाशात् । पयांसि उदकानि वृष्टिलक्षणानि । कीदृशोऽग्निर्दुदुहे । यह्वः महान् । अदाभ्यः अहिंस्यश्च । कीदृशस्य यजमानस्य थीय दुदुहे । अदिते अक्षीणयागक्रियस्य । किञ्च । विश्वं सर्वं । सोऽग्निर्वेद जानाति । किमिव । वरुणो यथा आदित्य इव । केन वेद । धिया प्रज्ञया आत्मानुरूपया । ईदृशोऽग्निस्स । यज्ञिय यज्ञार्हं । यजतु पूजयतु । यज्ञियान् यज्ञार्हानृतून् देवतात्मकान् ॥

रपद्गन्धर्वीरप्या च योषणा नदस्य नादे परि पातु मे मनः ।
इष्टस्य मध्ये अदितिर्नि धातु नो भ्राता नो ज्येष्ठः प्रथमो वि वोचति ॥

रपत् । रप ल[प] व्यक्तायां वाचि । रपितवती अग्निगुणान् व्यक्तमुक्तवती मनस्समागयोगात् ? । गन्धर्वी वाक् स्तुतिलक्षणा । अप्या च अद्भिः संस्कृता च योषणा । स्त्री आहुतिलक्षणा । अग्नि सम्यक्-पितवतीति शेष । नदस्य । नद इति स्तोतृनाम ।* स्तोतुर्मम संबन्धिनी । एतज्ज्ञात्वा इदानीमपि नादे शब्दे स्तुतिलक्षणे सम्यक्कर्त्तव्यत्वेन निमित्तभूते । परिपातु चलत्वादितश्चेतश्च गच्छन् स्वस्थापनेन सर्वतो रक्षत्वग्निर्मे मम स्वभूत मनः । येनाहं समाहितमतिर्भूत्वा सम्यक् स्तुतिं करोमीत्यभिप्रायः । किञ्चान्यत् । इष्टस्य यज्ञस्य मध्ये । अदितिरदीनोऽग्नि । नि धातु । धनदानेन श्रद्धाजननेन च नित्यं स्थापयतु । न· अस्मान् । किञ्च भ्रातापि । नः अस्माकं सम्बन्धी । ज्येष्ठः प्रथमः सर्वप्रयोजनेषु प्रधानः । वि वोचति । यन्मयोक्तं तदेव विशेषेण

---

* निघण्टुः ३ । १६ ॥

वाक्ति । एतदुक्तं भवति । अहमेव न केवलं सर्व एवास्मत् कुलीनो देवयागप्रिय इति ॥

सो चिन्नु भद्रा क्षुमती यशस्वत्युषा उवास मनवे स्वर्वती ।

यदीमुशन्तमुशतामनु क्रतुमग्निं होतारं विदथाय जीजनन् ॥३॥

सो चित् [तु] या पूर्वेष्वपि कालेषु अग्निर्यागार्थमुदितमति? । सैव नु क्षिप्रं। भद्रा कल्याणी । क्षुमती क्षुशब्दे स्तुतिशब्दवती स्तुतिमतीत्यर्थः । अथवा प्रातरुत्थितपक्षिमनुष्यादिशब्दवती । यशस्वती कीर्त्तिमती धनवती वा। उषा उवास उषितवतीत्यर्थः। किमर्थं । मनवे सर्वस्य मन्त्रज्ञातुरग्नेर्यागार्थमित्यर्थः । स्वर्वती आदित्यवती । आदित्यस्य प्रभासमीपस्थावेत्यर्थः। कदा उदितवती । उच्यते । यत् यदा । ईं एनं । उशन्तं स्तुतिं हविश्च कामयमान उशतां यष्टुं कामयमानानां यज्वनां संबन्धिनमग्निं । होतारं आह्वातारं। त्वेन ? होमकारिणं वा । अनु क्रतुं। विदथाय यज्ञाय यागार्थं । जीजनन् जनितवन्तः प्रज्वालितवन्तः ऋत्विग्यजमानः तदोदितवतीति संबन्धः ॥

अध त्यं द्रप्सं विभ्वं विचक्षणं विराभरदिषितः श्येनो अध्वरे ।

यदी विशो वृणते दस्ममार्या अग्निं होतारमध धीरजायत ॥४॥

अध अथ अनन्तरं । त्यं याग्नौ हूयते यज्वभिर्देवतार्थं तं । द्रप्सं दात्यच्छम् अति बहुलं सोमं । विभ्वं महान्तं । विचक्षणं विविधन्द्रष्टारं सर्वस्यावि पक्षी। आभरत आहृतवान्। इषितः प्रेषितोऽग्निना । श्येन । अध्वरे यज्ञे । किञ्च । यदि यदा । विशः मनुष्याः । वृणते प्रार्थयन्ते। दस्मं दर्शनीयं शत्रूणामुपक्षपयितारं वा । कीदृश[ाः] मनुष्याः आर्या अभिगमनीयाः । मां ब्रुवन्तो यजमाना इत्यर्थः । अग्निं होतारं होत्रा (?) पदार्थकारिणं आह्वातारं वा देवानां । अध अथ । धीः कर्म इतिकर्त्तव्यता । अजायत जायते प्रवर्त्तत इत्यर्थः ॥

सदासि रण्वो यवसेव पुष्यते होत्राभिरग्ने मनुषः स्वध्वरः ।

विप्रस्य वा यच्छशमान उक्थ्यं? वाजं ससवां उपयासि भूरिभिः ॥

सदा सततम् । असि भवसि । रण्व रमणीयः। किमिव । यवसा इव पुष्यते । यथा यवसानि हरिततृणयवादिघासाः । पुष्यतः स्वपुष्टि

कुर्वते हस्त्यश्वगोमहिष्यादिचतुष्पदस्य रमणीया प्रीतिकारास्सदा भवन्ति । किञ्च । होत्राभि । होत्रेति यज्ञनाम । *यज्ञे हे अग्ने ! मनुषो मनुष्यस्य सर्वस्य यज्वनस्वभूते । स्वध्वर सुयज्ञ मनुष्यसम्पन्धिना यज्ञाना विष्टरता गुणकारी भूयिष्ठभाग् भवेत्यर्थ । किञ्च । विप्रस्य वा मेधाविन[ । भूरि]भिर्बहुभिर्देवै च सह॥

उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत्त इष्यति ।
विवक्ति वह्नि स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥६॥

उत् ईरय उद्गमयत्वमात्मज्योतिरिति शेष । पितरा पिता मात्रित्येकशेषविज्ञानात् सर्वप्राणिनाम्माताभितृभूते द्यावापृथिव्यौ प्रतीति शेष । अथवा आदित्यादिज्योतिपूद्गमनस्य च प्रकाशनस्य च संबन्धदर्शनात् । उद्गमनेन प्रकाशन लक्ष्यते प्रकाशयोभे आवया वा पृथिव्यौ सुष्टु ज्वालित्यर्थ ? । किमिव । जार आ भग । आकारो ऽत्रोपमार्थ । रात्रेर्नक्षत्रादिज्योतिर्हीसनाञ्च जरयितृत्वाज्जार । आदित्य सवितृशब्द[ ? ]वा द्युस्थान । स यथा भगमादित्यन्द्युस्थानमेवोत्तरावस्थ भजनीय वा स्वज्यो तिः भौम वा पारदारिक एव भगोऽपि स्त्री भग यथाजार पारदारिकनो देवा हर्यतो याग कामयमानान् हृत्त हृदयेन इष्यति ।

इषिरय गत्यर्थस्तुञ्छोऽप्यभ्युपसर्गपूर्वोऽत्र द्रष्टव्य अधीष्यति अधिगच्छति देवास्यभेत्यर्थ ? । विवक्तिव[त्ति?]वक्ष[ति] शास्त्रलक्षणा स्तुती वह्निर्वोढा स्तुतीनान्देवान् प्रति प्रापयिता होता । स्वपस्यते शोभ नञ्च स्वकर्म कर्तुमिच्छति । मख । †मख शब्दाध्यज्ञनामस्तत्करोतीति णिच् व्यन्तादविहृते मख इति यज्ञकार्यध्वर्युरुच्यते । तविष्यते । तव तिर्वृद्धयर्थं । स चान्तर्णीतसनर्थश्च द्रष्टव्य एता ? वर्धयति च स्तोभलक्षणा स्तुर्तीर्वर्धयितुञ्चेच्छतीत्यर्थ । असुर प्राणवान् प्रज्ञावान् वा उद्गाता । वेपते टुवेपृ कपने उतपद्ये चे[त्यन्ये?]त्ते ऋत्विककर्म वैगुण्ये प्रायश्चित्तकारित्वात् कर्मवैगुण्योत्पत्तेर्बिभ्यत् कपते च । मती मत्या बुद्धया । क सामर्थ्यात् ब्रह्मा । यतो यजमान सर्वर्त्विजश्च

*निघण्टु ३ । १७ ॥ †३ ।१७॥

स्वं स्वं कर्म कर्तुमिच्छ[न्ति]न्त । तच्च त्वदुद्यामनमन्तरेण न शक्यते कर्तुं । अत उद्यामयेत्यर्थः ॥

यस्ते अग्ने सुमतिं मर्तो अक्षत्सहसः सूनो अति स प्र शृण्वे ।
इषं दधानो वहमानो अश्वैरा स द्युमाँ अमवान्भूषति द्यून् ॥७॥

यस्ते तव स्वभूतां । हे अग्ने । सुमतिं शोभनां स्तोतृणां यष्टॄणाञ्चानुग्राहिकां बुद्धिं । मर्तो मनुष्य स्तोत्राख्यो यष्ट्राख्यश्च । अक्षत् अश्नोति । स्तुतिभिर्हविर्भिश्च त्वामनुग्रहशीलं परिचरतीत्यर्थः । हे सहसस्सूनो बलस्य पुत्र । स मनुष्यः । अति च[प्र] शृण्वे श्रूयते । सर्वांल्लोकानतीत्य प्रकर्षेण श्रूयते । इषमन्नं । दधानः [भृ]त्यान्यर्थिभ्यो ददन् । वहमान ऊह्यमानश्च । अश्वै[ः]तोत्तरकालं ? देवो भूत्वा । द्युमान् द्युस्थानवान्दीप्तिमान् वा । अमवान् आत्मवांश्च स्वाधिकारं प्रति यत्नवान् वेत्यर्थ । भूषति भवति । कियन्तं कालं । उच्यते । द्यून् द्युरित्यहर्नाम* । [आचन्द्रार्कं] मित्यर्थ ॥

यदग्न एषा समितिर्भवाति देवी देवेषु यजता यजत्र ।
रत्ना च यद्विभजासि स्वधावो भागं नो अत्र वसुमन्तं वीतात् ॥८॥

यत् यदा । त्वेग्ने । एषा अस्मत् कृता । समिति स्तुतिसंगतिराहुतिसंगतिश्च । भवाति । देवी दीप्ता गुणैः । उच्यते । देवेषु । क्रीडदेशेषु । यजता यजतेषु यष्टव्येषु । देवा यष्टव्या अस्माभि स्तूयन्ते इज्यन्ते चेत्यर्थः । हे यजत्र यष्टव्य । रत्ना रत्नानि च धनानि । यत् यदा । विभजासि स्तोतृभ्यो यष्टृभ्यश्च विभजासि । हे स्वधावः हविरन्नवन् । भागं अंशं । नः अस्मान् प्रति । अत्र काले तदेत्यर्थः । वसुमन्तं धनवन्तं नानाधनावयवं सर्वकार्यनिर्वर्त्तनक्षममित्यर्थः । वीतात् । तुह्योस्तातङ्ङाशिष्यन्यतरस्यामिति ।† हे स्थानेऽत्र तातङ् । अन्तर्णीतण्यर्थश्चात्र द्रष्टव्यः । वादय गमयास्मभ्यं देहीत्यर्थः ॥

श्रुधी नो अग्ने सदने सधस्थे युक्ष्वा रथममृतस्य द्रवित्नुम् ।
आ नो वह रोदसी देवपुत्रे माकिर्देवानामप भूरिह स्याः ॥९॥

---

* निघण्टु १ । ९ ॥   † पा० ७ । १ । ३५ ॥

हे अग्ने । श्रुधि शृणु । नः अस्माकं वचनमिति शेषः । क स्थितः । उच्यते । सदने स्थाने वेद्याख्ये । कीदृशे । सधस्थे सहस्थाने सर्वदेवसाधारणस्थाने । तमद्वचनं* उच्यते । युक्ष्व आह्वान्देवान् प्रति गमनाय युंक्ष्व । रथमात्मीयं । कीदृशं । अमृतस्य देवपानस्य मधुन । द्रवित्नुं द्रवितारं युंक्ष्व रथं । तेन गत्वा च । नः अस्माकं यज्ञं प्रति । आ वह प्रापय । रोदसी द्यावापृथिव्यौ । देवपुत्रे देवस्य प्रजापतेर्दुहितरौ । माकिः मा च कश्चित् । देवानां मध्ये एकोऽपि देवः । अप भूः अप भविता स्यात् । अस्मद्यज्ञानपगन्ता स्यात् । निरवशेषान्देवानाह्वयस्वेत्यर्थः । त्वमपि च । इहास्मिन् यज्ञे अस्मदीये । सदा सन्निहित स्या भवत् ॥

॥ द्वादश सूक्तम् ॥

द्यावा ह क्षामा प्रथमे ऋतेनाभिश्रावे भवतः सत्यवाचा ।
देवो यन्मर्तान्यजथाय कृण्वन्त्सीदद्धोता प्रत्यङ् स्वमसुं यन् ॥ १ ॥

ह शब्दोऽत्र पादपूरणः । द्यावाक्षामा द्यावाक्षामे द्यावापृथिव्यौ । प्रथमे पिण्डाधाराण्डकपालाभिमानित्वसृष्टौ पूर्वजाते इत्यर्थः । प्रधाने वा । ऋतेन तन्निवासिना देवजनेन सहेत्यर्थः । अभिश्रावे मुख्येन श्रयत इत्यभिश्रावस्तत्र । भवतः । लोडर्थेऽत्र लट् । सामीप्यलक्षणा च । सप्तम्येषा ग ? गायां ? गायश्चरन्तीति । यथाह्वान समनारमद्धर्माभिर्येतामित्यर्थः । कीदृश्यौ द्यावापृथिव्यौ । सत्यवाचा सत्यवाचौ अवितथवचने सत्यवादिन्यावित्यर्थः । कदा अभिश्रावे भवतः । उच्यते । देवोऽग्निः । यत् यदा । मर्तान् मनुष्यान् । यजथाय देवयागाय । कृण्वन् कुर्वन् प्रेरयन् । सीदत् निषीदति वेद्यां । होता देवानामाह्वाता । प्रत्यङ् देवान् प्रत्यञ्चिताह्वानार्थं । स्वमात्मीयं । असुं प्राणज्वालालक्षणं सर्वार्थदर्शनलक्षणं । यन् प्राप्तवांश्च । तदा प्राप्ते अस्मद्यागकाले देवान्द्यावापृथिवी मनुष्यानग्निराह्वयतीत्यर्थः ॥

देवो देवान्परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान् ।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान् ॥ २ ॥

यस्त्वं देवः । देवान् । परिभूः देवानां परिग्रहीता व्याह्वानहवि-

---

*कि तद्वचन—सायणपाठः ।

ग्नयनद्वारेण स त्व । ऋतेन यज्ञेन सह । वह प्रापय । न अस्माक । हव्य हवि । प्रथम यागसाधनाना पूर्व प्रधानो वा । चिकित्वान् ज्ञातवाश्च । धूमकेतु धूमस्य कर्त्ता च धूमपताका वा धूमज्ञानोपायश्च । समिधा समि-धनेन सन्दीपनेन । भाऋजीक । ऋजुकदीप्ति । ऊर्ध्व ज्वलन इत्यर्थ । मन्द्र स्तुत्यश्च । होता आह्वाता च देवाना । नित्यो ध्रुव । वाचा । यजीयान् अतिशयेन यष्टा च ॥

स्वावृग्देवस्यामृतं यदी गोरतो जातासो धारयन्त उर्वी ।
विश्वे देवा अनु तत्ते यजुर्गुर्दुहे यदेनी दिव्य घृत वाः ॥ ३ ॥

यदि यद्यपि । गो पृथिव्या । अत अस्यास्सकाशात् । जातास जाता उत्पन्ना । अस्या पृथिव्या भवा पृथिवीलोकनिवासिनो यज माना इत्यर्थ । धारयन्ते हविषा स्थितिं कुर्वन्तो विभृति? । उर्वी द्यावापृथिव्यौ सकलजगतस्थितिं कुर्वन्तीत्यर्थ । तथापि स्वावृक् स्वावर्जन हविराधारत्वात् सस्कर्तृत्वात् न[त्रि]त्वाच स्वदत्तिरेवेत्यर्थ । देवस्य तवाग्ने । अमृत देवाना[च] हविरित्यर्थ । हविषा त्वमेव जगत् पुष्ण नान्य कश्चिदित्यर्थ । सर्वे देवा वृष्टिद्वारेण प्रदानद्वारेण पुष्ण न्तीति चेत् नयत । विश्वेदेवा अनु गु । अग भावार्थमनुगच्छन्ति । तत् तदा । के सबन्धि त्वत् प्रदानकर्तृकमित्यर्थ । यजु यज्ञ । दुहे दाग्धि प्रक्षरन्ति । यत् यदा वा । एनी एनवर्णा शुद्धस्वरूप[ा] वा आहुति स्तुतिश्च त्वयि हुता स्तुता च सती । दिव्य दि ? । घृ क्षरणदीप्त्यो । क्षरति दीप्त वा आदित्यमण्डले परवामित्यर्थ ? । वा वारि वृष्ट्यु दक अतस्त्वमेव सस्काराहुत्याधारादिद्वारेण जगतस्थितिं करोषी त्यर्थ ॥

अर्चामि वां वर्धायापो घृतस्नू द्यावाभूमी शृणुत रोदसी मे ।
अहा यद्द्यावोऽसुनीतिमयन्मध्वा नो अत्र पितरा शिशीताम् ॥४॥

हे अग्ने । वर्धाय प्रज्वल प्रोत्सर्पयेत्यर्थ । अप कर्म अग्निना कर्माणि प्रोत्सर्पितेऽग्निप्रसादेन चाभ्यनुज्ञाते च । अर्चामि । ऋच स्तुतौ । स्तौम । वा युवा । हे घृतस्नू । वृष्ट्युदकस्य प्रसवित्र्यो । द्यावाभूमी द्यावापृथिव्यौ । एतत्स्तुत्या मे मम स्तुतिरिति शेष । शृणुत हे

रोदसी द्यावापृथिव्यौ । कस्मादेवं ब्रवीमि । यत् यस्मात् । अह्ना अहरित्य[स्य] सामर्थ्यादहोरात्रसाध्यं कर्मोच्यते । सप्तम्येकवचनस्य चा[अजा]देशः । अहनि अहोरात्रसाध्ये कर्मणि । अग्निना प्रोत्सर्पिते सति । द्यावः सामर्थ्यात् पृथिव्यश्च । असुनीतिं । असुरीति प्रज्ञा ।* तया परिसमाप्तिर्नीयत इत्यसुनीतिरत्र स्तुतिरुच्यते । तां श्रोतुं । अयन् गच्छन्ति । अत एवं ब्रवीमि । श्रुत्वा च स्तुतिमग्निसाध्ये कर्मणि तदनुशासनेन । अथवा वृष्ट्युदकेन । नः अस्मान् । अत्र लोके या वर्तमानानिति शेषः । पितरा सर्वस्य मातापितृभूते द्यावापृथिव्यौ । शिशीतां शो तनू[करणे] इत्यस्यैतद्रूपं । शिशीते शृंगे † इति यथा । तनूकरणेन चात्र संस्कारो लक्ष्यते । स्नानपानाचमनस्यनिष्पादनादिसंस्कारेण संस्कुरुतामित्यर्थः ॥

किं स्विन्नो राजा जगृहे कदस्याति व्रतं चकृमा को वि वेद ।
मित्रश्चिद्धि ष्मा जुहुराणो देवाञ्छ्लोको न यातामपि वाजो अस्ति ॥५

किं स्वित् । स्विच्छब्दो वितर्कार्थे । किं वा । नः अस्माकं स्वभूतानि हवींषि स्तुतींश्च । राजा सर्वस्य स्वामी । दीप्तो वाग्निः । जगृहे परिगृह्णीयात् । परिचरणवैगुण्यात् । कत् किं वा । अस्याग्नेर्व्रतं कर्मपरिरक्षणाख्यं । अति चकृम । अति सु इत्यभिपूजितार्थं[यें] ।‡ अभिपूजितं । ॥६

॥ त्रयोदश सूक्तम् ॥

यमे इव यतमाने यदैतं प्र वां भरन्मानुषा देवयन्तः ।
आ सीदतं स्वमु लोकं विदाने स्वासस्थे भवतमिन्दवे नः ॥ २ ॥

इव शब्दः । यतमाने गमनपर्यवधारणादिस्थाधिकारकमप्रयत्नं कृतवती । परस्परेण संगच्छमाने वा । यत् यदा । एतं गतवतीस्थो युवां हविर्धानस्थानं प्रति तदा । वां युवां । हविर्धानशकटे

*निघण्टुः ३ । ९ ॥

†यद्धः० ९।२८॥ महाभाष्येऽपि ६।१।४५॥ अत्र द्रष्टव्यः । निरुक्त४।१८॥

‡निरुक्त १ । ३ ॥

§यद्यपि कोशात् ज्ञायते, परन्तु भ्रमपातोऽत्र जातः । नास्ति सन्देहोऽस्मिन् ।

द्वे अपि । प्र भरन् प्रभवन्तः । हविर्धाने प्रत्याहृतवन्त इत्यर्थः । मनुष्या ऋत्विजश्च यजमाना । देवयन्त. देवान् यष्टुमिच्छन्तस्सन्त । एतज् ज्ञात्वा आसीदतं निषीदतं स्वस्वस्थाने तिष्ठतमित्यर्थ. । उकारः पदपूरणः । स्वमात्मीयं । लोकं स्थानं हविर्धानगृहाख्यं । विदाने असाधारणत्वेन जानती । असाद च स्वासस्थे सुस्थाने स्वासने भवतं । इन्दवे नः । अस्माकमिन्दोरर्थाय ॥

पञ्च पदानि रुपो अन्वरोहं चतुष्पदीमन्वेमि व्रतेन ।

अक्षरेण प्रति मिम एतामृतस्य नाभावधि सम्पुनामि ॥ ३ ॥

पञ्च संख्याकानि । पदानि पदितॄणि स्थितिहेतुत्वेन देवान् प्रति गन्तॄणि । के हवींषि । धानासोमपशुपुरोळशा[ज्या]ख्यानि । रुप यष्टृणां स्वर्गमारोपयितुर्यज्ञस्यांगत्वेन * संबन्धीनि । अनु अरोहं युवयो स्वासनभवनानन्तरमारोहामि । भवत्करणेन करोमीत्यर्थः । चतुष्पदीमिति च्छन्दसामुपलक्षणं । चतुर्भिः पादैर्युक्तानि त्रिष्टुप्च्छ न्दांसि चेत्यर्थः । अनु एमि अनुगच्छामि । व्रतेन प्रयोगकर्मणा यथा काले प्रयुनज्मीत्यर्थ' । अक्षरेण च प्रणवाख्येन । प्रति मिमे प्रतिगर- क्रियां निर्मिमे निर्वर्तयामि । एकां[एतां] प्रत्युपस्थितां । किञ्च । ऋतस्य नाभावधि सं पुनामि । अधिशब्दश्रुतिसामर्थ्यान्नाभाविति । षष्ठ्यर्थे सप्तम्येषा । ऋतस्य यज्ञस्य प्रधानांगत्वेन हेतुना नाभिभूताया वेद्या' । अधि उपरि । सं पुनामि संशोधयामि । दशापवित्रेण सोमञ्च संस्करोमीत्यर्थ. ॥ किञ्च ।

देवेभ्यः कमवृणीत मृत्युं प्रजायै कममृतं नावृणीत ।

बृहस्पतिं यज्ञमकृण्वत ऋषिं प्रियां यमस्तन्वं१प्रारिरेचीत् ॥ ४ ॥

देवेभ्यः देवानां । कं स्वपुरुषं । मृत्युं मारयितारं विनाशकं । अवृणीत वृणीते प्रार्थयते प्रयुंक्ते यम । हविर्धादेवव्यतिरिक्त [का] या हविर्धारणक्रियायां प्रवृत्तायाः सते देवानां स्थितेः अवश्यंभावि- त्वाच्च कञ्चिदपि स्वपुरुषं देवानां विनाशकं निरूपयति यम इत्यर्थः । प्रजायै प्रजायाश्च मनु[ष्य]काया देवव्यतिरिक्ता. । कं वा अमृतं

---

* रोपयितृ यज्ञ०—कोपपाठः ।

स्वपुरुषममृतममारकमविनाशकम् । अवृणीत् न वृणीते न प्रार्थयते । पूर्वोक्तेनैव प्रकारेण सर्वस्य स्थितेरवश्यंभावित्वात् । कं वा स्व वृहत्य[त्यर्ति] ऋषिसदृशं सर्वगुणोपेतमित्यर्थः । यममवृण्वत कुर्वन्ति ऋत्विग्यजमानाः । किञ्च । प्रियां तन्वमिष्टं शरीरं यम प्र यरिरेचीत् । अनेकार्थत्वात् धातूनां रिचिरत्र परिहारार्थे द्रष्टव्यः । प्ररेचयति परि हरति । कर्मवैगुण्यजनितदोषाभावादस्माकञ्जीवितं नापहरतीत्यर्थः ॥ किञ्चान्यत्—

सप्त क्षरन्ति शिशवे मरुत्वते पित्रे पुत्रासो अप्यवीवतन्नृतम् । उभे इदस्योभयस्य राजत उभे यतेते उभयस्य पुष्यतः ॥ ५ ॥

सप्त छन्दांसि क्षरन्ति । स्तुतिमिति शेषः । शिशवे शिशोः शंसनं यस्य सोमस्य हविर्धानस्य शकटयोः सुखासनीभूतस्य । मरुत्वते मरुत्वतः मरुद्भिः*ऋत्विग्भिस्सप्तभि स्तोत्रभिश्च युक्तस्येत्यर्थः । पित्रे पितुः ऋत्विजां सर्वस्य वा जनकत्वात् पितृभूतस्येत्यर्थः । पुत्रासः अपि सोमस्य पुत्राः अपि सोमस्य पुत्रभूता च ऋत्विजोऽपि । अवीवतन् गमयन्ति । ऋतं सत्यं स्तुतिरूपं सद्गुणग्राहिणीं स्तुतिं कुर्वन्तीत्यर्थः । उत्तरोऽर्धर्चः परोक्षतत्वात् भिन्नं वाक्यं । किं बहुनोक्तेन । उभे इत् । इच्छन्द एवार्थे । उभे एव हविर्धाने नान्यत् । अस्य उभयस्य देवजातस्य मर्त्यजातस्य । राजत ईशाते । तदधीनत्वाद्धविर्धारणस्य हविरधीनत्वाच्चोभयस्य स्थितेरुभे एव हविर्धाने । यतेते कर्मानुष्ठाने प्रयत्नञ्च कुरुत । तदधीनत्वाद्धविर्धारणस्य हविः प्रधानत्वाच्च कर्मानुष्ठानस्य उभयस्य देवजातस्य मर्त्यजातस्य च । पुष्यत हविर्धारणद्वारेण पुष्टिञ्च कुरुत इत्यर्थः ॥

॥ चतुर्दश सूक्तम् ॥

उत्तरं सूक्तं परेयिवांसमिति षोडशर्चं यमदेवतं । यमो वैवस्वतो ददर्श ॥

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य ॥ १ ॥

*मरुद्भि ऋत्विग्भिस्सप्तभि ?

परेयिवांस उपसर्गव्यत्ययोऽत्र सामर्थ्यात् कार्य । लिट् चात्र वर्त्तमाने । पर्यागच्छन्त । लोक पालत्वात् कृताकृतप्रत्यवेक्षणार्थमेत न्मन्त्रपद द्वितीयाबहुवचनान्त । यास्कमहर्षिणात्र + त्रास्यार्थसामन्दे [मान्यादि]ति तिर्यग्गतजातविशेषणार्थमद्ध्याहृत।*पवत प्रगताधमादि समर्थपुरुषार्थसबन्धात् प्रकृष्टगा मनुष्यजातावित्यर्थ । उद्वत उद्गताश्च देवजात सर्वतो गतत्वा न बहुभ्य मिता अनुप्रमितीत्यर्थ । षष्ठ्यर्थे चतुर्थ्येषा । बहूनामपरिमितानामेतेषामेव प्राणिना । पन्था पन्थान मार्ग शुभाशुभकर्मप्रवृत्तिलक्षण वा। अनुपस्पशान स्वस्थाना । स्पशिर्बन्धनार्थे । विचक्षन्त । शुभाशुभकर्मप्रवृत्तिलक्षणमार्गपक्षे नि रूपयन्तमित्यर्थ । जीविलक्षणमार्गन्निरुध्यन्तमित्यर्थ । वैवस्वत विवस्वत पुत्र । सगमन स्वर्ग प्रति सम्यग्गमयितार । जनाना । यम राजान सर्वस्येश्वर । हविषा दुवस्य परिचर । हे मदीयान्तरात्मन् यजमान वा ॥

यमो नो गातुं प्रथमो विवेद नैषा गव्यूतिरपभर्तवा उ ।

यत्रा नः पूर्वे पितरः परेयुरेना जज्ञानाः पथ्या३अनु स्वाः ॥ २ ॥

यम । न अस्माक प्रजाना। गातु शुभाशुभकर्मनिमित्ता सुगतिं दुर्गतिञ्च । प्रथम अन्यस्मात् सर्वस्मात् ज्ञातु पूर्व । विवेद जानाति। एषा गव्यूति ।एषा य[ा]शुभाशुभकर्मजनितसुगतिदुर्गतिश्च। नाऽपभर्तवे । अतिशयज्ञानयोगाद्य[मस्य] न केनचिदपहर्तुमपनेतु स्व विधानेनाभिभवितु शक्यत इत्यर्थ । किञ्च। यत्र यस्मिन् स्वर्गे । न अस्माक । पूर्वे पितर पितामहादय । परा ईयु आप्तकामत्वात् स्वपुत्रदारानवेक्षमाणा पराङ्मुखागता ।एना अनेन यज्ञेन हेतुना। जज्ञाना सस्कारद्वारेण पुनर्जायमानास्सस्क्रिरिमसुरा ? आहुतीस्तु तीश्च । स्वा स्वभूता । अनु आहुति सस्कारानन्तर सस्कृतास्सन्त इत्यर्थ । तदप्यस्मत् पितृगतिस्थान यम एव तत्वतो जानाति नान्य इति पूर्वोक्त ? सर्व ॥

मातली कव्यैर्यमो अङ्गिरोभिर्बृहस्पतिर्ऋक्वभिर्वावृधानः ।

यांश्च देवा वावृधुर्ये च देवान्त्स्वाहान्ये स्वधयान्ये मदन्ति ॥३॥

---

* निरुक्त १० । २० ॥ † स्वस्थाने ?

मातली सारथिरिन्द्रस्य। कव्यैः कव्यनामभिः पितृभिस्सह। वावृधानः सर्वप्रधानया वृध्या वर्द्धमानः आस्ते। यमप्रसादादिति वाक्यशेषः। यमश्चांगिरोभिस्सह सदा वर्द्धमान आस्ते। बृहस्पति ऋक्वभिः। ऋक्वो देवविशेषाः। ऋक्वभिर्मध्यस्थानैर्देवगणैस्सह सदा वावृधानो वर्द्धमान आस्ते। यमप्रसादात्। किञ्च यांश्च पितृन् देवा वावृधुः वर्द्धयन्ति स्वेनोपकारेण। ये च पितरो देवान् स्वेनोपकारेण वर्द्धयन्ति। यच्छन्दसंबन्धात्तच्छब्दोऽध्याहार्यः। तेषां पितृणां मध्ये एके पितरः स्वाहा मदन्ति। स्वाहाकारप्रदानेन हविषा तृप्यन्ति। यमेन सह स्वधयान्ये मदन्ति। स्वधाकारप्रदानेन हविषैके तृप्यन्ति यमेन सह ॥

इमं यम प्रस्तरमा हि सीदाङ्गिरोभिः पितृभिः संविदानः।
आ त्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व॥४॥

इमं। हे यम। प्रस्तरं अस्मदीयवेदिस्तरणगर्भासनं* प्रति। आ हि सीद। ह्रीति पदपूरणः। उपवेष्टुमागच्छ। किं कुर्वन्। उच्यते। अंगिरोभिः। अंगिरो नामभिः पितृभिस्सह[सं]न् पथिविनोदनार्थं विचित्रा कुर्वन्नित्यर्थः। आगच्छ तं च सन्त त्वां स्तुतिमन्त्राः कविशस्ता मेधाविभि ऋत्विग्भिः आ वहन्तु। श्रोतव्यत्वेन निमित्तभूताः प्रापयन्तु। आगत्य च इहास्मद् यज्ञे। मादयस्व तर्पयात्मानं तृप्य वा॥

अङ्गिरोभिरा गहि यज्ञियेभिर्यम वैरूपैरिह मादयस्व।
विवस्वन्तं हुवे यः पिता तेऽस्मिन्यज्ञे बर्हिष्या निषद्य॥५॥

अंगिरोभिस्सहा गच्छ। यज्ञियेभि यज्ञार्हैः। यज्ञसंपादिभिर्वा। विरूपा एव वैरूपाः। बहुरूपैरित्यर्थ। आगत्य च इहास्मद्यज्ञे।[मादयस्व] तर्पयात्मानं तृप्य वा। ते तव। तमित्यध्याहार्यं। यदिति सामर्थ्यात्। तेन चाहूतेन सहास्मिन् यज्ञे बर्हिषि वेदिस्तरणे आ निषद्य मर्यादयोपविश्य। हविषा मादयस्वेत्यर्थः॥

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम॥६॥

ये पितरो वा। नः अस्माकं। पितरः। कीदृशाः। नवग्वाः मासे

*दर्भासन।

मासे पितृयज्ञे नवा गतिः । न पतिते वा मनसो गतिरभिलाषः । भृगवश्च । सोम्यासः सोमसंपादिनः । तेषां सर्वेषामेव । वयं । सुमतौ शोभनायामनुग्राह्यबुद्धौ । यज्ञियानां यज्ञार्हाणां यज्ञसंपादिनां वा । अपि । भद्रे भन्दनीये भाजनवति वा । सौमनसे सौमनस्ये प्रीतावित्यर्थः । स्याम भवेमेत्याशास्महे । यमप्रसादादिति योज्यं । तद्देवतत्वाविघाताय मन्त्रस्य··· ····· ॥*

पंचदश सूक्तम् ।

अग्निष्वात्ताः पितर एह गच्छत सदःसदः सदत सुप्रणीतयः ।
अत्ता हवींषि प्रयतानि बर्हिष्यथा रयिं सर्ववीरं दधातन ॥११॥

·····तैरस्माभिः संस्कृतानि शुचीनि† । बर्हिषि आसादितानीति शेषः । अथ अनन्तरं च । रयिं धनं । सर्ववीरं सर्वैर्वीरैः पुत्रैः पौत्रैश्चोपेतं । दधातन दत्तास्मभ्यं ॥

त्वमग्न ईळितो जातवेदोऽवाड्ढव्यानि सुरभीणि कृत्वी ।
प्रादाः पितृभ्यः स्वधया ते अक्षन्नद्धि त्वं देव प्रयता हवींषि ॥१२॥

हे अग्ने जातवेद उत्पन्नसर्वविषयवस्तुज्ञान । त्वमस्माभिरीळित स्तुत । अवाट् ऊढवानसि पितॄन् प्रति प्रापितवानसि । हव्यानि हवींषि । सुरभीणि सुगन्धीनि । कृत्वी कृत्वा । प्र अदाः प्रत्तवांश्चासि । पितृभ्यः ते च पितरस्त्वया प्रत्तानि । स्वधया अन्नेन हेतुना अन्नमेतदस्माकमित्यभिप्रायेण । अक्षन् अत्तवन्तो भक्षितवन्त. । अथेदानीं कृतोपकारः सन् । अद्धि भक्षय त्वं हे देव । प्रयता प्रयतानि शुचीनि हवींषि ॥

---

* अग्रे "प्रेहि प्रेहि" इति मन्त्रप्रतीक विद्यते । परं नास्ति मन्त्रव्याख्यानम् । बहुमपपातो जातः ।

† महमोक्षमूलरेण सायणीये भाष्येऽत्र शुचि इत्येव पाठ स्वीकृत । असमीचीनमेतत् । कुत. । प्रयतानि इत्यस्य पदस्य नायमर्थः । मुम्बई-संस्करणे शुचीनि इति उद्गीथभाष्यवत् शुद्धः पाठो वर्तते । मोक्षमूलरस्य C२ कोशेऽपि शुचीनी इत्येवमेवास्ति पाठः । उत्तरमन्त्रस्य चतुर्थे पादे प्रयता इति पद पुनरप्यस्ति । परं तत्रापि शुचि इति तत्पदस्य नार्थो न दृश्यते ।

ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म ।
त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञं सुकृतं जुषस्व ॥ ३ ॥

ये च पितर च । इहास्मत् समीपे वर्तन्ते । ये चेह न सन्ति । यांश्च पितॄन् विद्म सन्निकृष्टत्वाज्जानीमो वय । यान् उ च न यानपि च न । प्रविद्म विप्रकृष्टत्वान्न विजानीमो वय । यति ते यत् सख्या युताश्च ते पितर तान् सर्वान् यथोक्तान् । त्व वेत्थ त्वमेव जानासि । हे जातवेद उत्पन्नसर्वविषयवस्तुज्ञान । यत एवमत तेषा यत्सख्या युक्ताना पितॄणा । स्वधाभिरन्नैर्दातव्यत्वेन हेतुभूते । इम यज्ञ । सुकृत साधुकृतमपि गुणवद्भिरनुष्ठित । जुषस्व प्रीत्या परिगृहाण ॥

ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते ।
तेभिः स्वराळसुनीतिमेतां यथावश तन्वं कल्पयस्व ॥ १ ॥

ये पितर । अग्निना दग्धा अग्निना भस्मीकृता । श्मशान कर्म प्राप्ता इत्यर्थ । ये चाऽनग्निदग्धाः श्मशानकर्म न प्राप्ता । मध्ये दिव । स्वधयाऽन्नेन स्वकर्मफललक्षणेन । मादयन्ते तृप्यन्ति । तेभि तै पितृभि सह सभूय । स्वराट् स्वकर्मफलोपभोगेन दीप्य मानः । असुनीति असूना प्राणाना विषयेषु नेतार स्वभोगापनयाय प्रवर्तयितारमस्मत् पित्रन्तरा मान । एता तन्व एतद्देवताशरीर । यथावश यथाकाम । यथाभिलषितमित्यर्थ । कल्पयस्व समर्थयस्व । गाभयस्वेत्यर्थ । अग्निरेव पूर्वोक्तो वेदितव्य । पूर्वमन्त्रेन्तस्यममप्र तत्वात्[1] ।

षोडश सूक्तम् ।

उत्तर सूक्तमैनमग्न इति चतुर्दशार्चमग्निदेवत । श्मशानकर्मणि विनियुक्त । यामायनो दमनो ददर्श ॥

मैनमग्ने वि दहो माभि शोचो मास्य त्वच चिक्षिपो मा शरीरम् ।
यदा शृत कृणवो जातवेदोऽथेमेन प्र हिणुतात्पितृभ्यः ॥ १ ॥

पुत्रो ब्रवीति ऋत्विग्वा । एनमस्मत् पितर । अस्मद्याज्य वा । प्रतसस्कारार्थं त्वयाऽहित ! हे अग्ने । मा वि दह विविधदग्धमनन्त रम्मा कार्षी । माभिशोच । मा सन्ति तप । [?] अभिसन्तप्तमन्ददग्ध

च मा कार्षीरित्यर्थः । त्वचं अपि दग्धमभि । मा शरीरं च मा विक्षिप । किन्तर्हि करवाणि । उच्यते । यदा यस्मिन्काले । शृतं पक्वं सुदग्धं । कृणवः करिष्यसि । हे जातवेदः । अथ ईं तदैव । एनं प्र हिणुतात् प्रगमय । पितृभ्यः पितॄणां सकाशं पितृलोकमित्यर्थः ॥

शृतं यदा करसि जातवेदोऽथेमेनं परि दत्तात्पितृभ्यः ।
यदा गच्छात्यसुनीतिमेतामथा देवानां वशनीर्भवाति ॥ २ ॥

शृतं पक्वं । यदा करसि करिष्यसि । हे जातवेदः । अथेमेनं परि देहि समर्पय पितृभ्यः पितृलोकं प्रापयेत्यर्थः । कस्मादेवमुच्यसे । यतः यदा । गच्छाति प्राप्नोति । असुनीतिं असूनां प्राणानां देहान्तरनेतारं पितृपतिं यमं । एतां च पितृतां । अथानन्तरं । देवानां वशनीः वशानां कामानामात्मान्नम ? प्रति नेता । भवाति भविष्यति । देवभोगानां भोक्ता संपत्स्यत इत्यर्थः ॥

सूर्यं चक्षुर्गच्छतु वातमात्मा द्यां च गच्छ पृथिवीं च धर्मणा ।
अपो वा गच्छ यदि तत्र ते हितमोषधीषु प्रति तिष्ठा शरीरैः ॥३॥

सूर्यं स्वकारणं । चक्षुस्तव संबन्धि । गच्छतु प्राप्नोतु । वातं गच्छत्वात्मा । तव शरीरान्तर्गतो वायुः अन्यानि च वागादीनीन्द्रियाण्यग्न्यादिदेवेषु स्वकारणेषु लीयन्तां । प्रदर्शनार्थत्वात् सूर्यचक्षुर्वातात्मग्रहणस्य । द्यां । च चशब्दोऽत्र विकल्पार्थे । दिवं वा गच्छ प्राप्नुहि । देवशरीरे स्वकर्मानुरूपं फलमुपभोक्तुं । पृथिवीं च । पृथिवीं वा गच्छ । धर्मणा स्वकर्मणा । अपो वा गच्छ । आप इत्यन्तरिक्षनाम ।* अन्तरिक्षं वा प्राप्नुहि । तत्रान्तरिक्षे । ते तव । कर्मफलं हितं स्वस्थापितं । ओषधीषु प्रति तिष्ठ । शरीरैः । बहुवचनसामर्थ्यात् शरीरावयवैरित्यर्थः । अथवा ओषधी लोमानि वनस्पतिं केशाः इति वचनात् । ओषधिवनस्पतिषु शरीरजलोमकेशात्मना प्रतितिष्ठेत्यर्थः । अन्यदपि श्रुत्यन्तरे यद्दृष्टमप्सु लोहितं च रेतश्चेत्यादि तत्सर्वमत्र द्रष्टव्यं ॥

अजो भागस्तपसा तं तपस्व तं ते शोचिस्तपतु तं ते अर्चिः ।

* निघण्टु. १ । ३ ॥ † प्रमानमन्येषगविम् ।

यास्ते शिवास्तन्वो जातवेदस्ताभिर्वहैनं सुकृतामु लोकम् ॥ ४ ॥

यस्य यजमानस्य यः । अज. अनुत्पत्तिधर्मकः नित्य अन्तर· पुरुपलक्षणः । भागः शरीरेन्द्रियादिभागव्यतिरिक्त । तं भागं । तपसा सन्तापनांगारगतेन । तपस्व सन्तापय संस्कुर्वित्यर्थ । तमेव भागं । ते तव । शोचि· दीप्तिः । तपतु संस्करोतु । तमेव भागं । ते तवार्चिरपि ज्वालालक्षणं संस्करोतु । संस्कृत्य च या । ते तव । शिवास्सुखाः प्रह्लादिन्यः । तन्व मूर्तयः । हे जातवेद । ताभिस्त- नुभि । वह प्रापय । एनं यजमानं । सुकृतां शोभनकर्मकारिणां पितॄणां । लोकं स्थानं । उ इति । सुकृतं लोकं ।

अव सृज पुनरग्ने पितृभ्यो यस्त आहुतश्चरति स्वधाभिः ।
आयुर्वसान उप वेतु शेपः सं गच्छतां तन्वा जातवेदः ॥ ५ ॥

पुनः हे अग्ने । अवसृज देहम [मित्य?] पितृभ्य युष्माभिस्सह स्थानाधिकारभोगादिभिस्समानोऽयमिति समर्पयेत्यर्थः? । उप वेतु । कमवसृजानि । यस्ते तुभ्यं आहुतः । हु दानास्कारर्थे? । मर्यादया दत्तः । सञ्चरति गच्छति पितॄन् प्रति । केन हेतुना । उच्यते । स्वधा- भिरन्नैः कर्मफललक्षणैर्भोक्तव्यत्वेन हेतुभूतेत ? सुकृतफलोपभोगा- र्थमित्यर्थः । तमघ सृज । किं च । आयुः । हं ? । वसानः आच्छादयन् सर्वगतेनार्जावेनाधिष्ठितस्सन्नित्यर्थः । उप वेतु कर्मशेपसमापनायोप- गच्छतु । यज्ञमस्थिलक्षणदशरीरशेपः । उपगम्य च तव प्रसादात् । संगच्छतां संयुज्यतां । तन्वा यज्ञशरीरेण हे जातवेदः ॥

यत्ते कृष्णः शकुन आतुतोद पिपीलः सर्प उत वा श्वापदः ।
अग्निष्टद्विश्वादगदङ्कृणोतु सोमश्च यो ब्राह्मणाँ आविवेश ॥ ६ ॥

यदंगं । ते तव यजमानस्य संबन्धि । कृष्णश्शकुनः काका- ख्य । आतुतोद ईपन्मर्यादया आभिमुख्येन वा तुन्नवान् व्यथितवान् । पिपील पिपीलिका वा सर्पो वा । उत वा अपि वा । श्वापदश्च सृगा- लक । तदंगमग्नि विश्वात् विश्वस्यात्तास ' ॥*

* अत्रापि भाष्यपाठक्रमः मुद्रितः । परन्तु कोशेऽस्य घोतनात्मक चिन्हमपि नास्ति । लेखकप्रमादोऽयमित्येतरमाञ्ज्ञायत ।

क्रव्यादमग्निं प्र हिणोमि दूरं यमराज्ञो गच्छतु रिप्रवाहः।
इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन् ॥ ९ ॥

अग्निं प्रहिणोमि । हि गतौ । प्रगमयामि । दूरं विप्रकृष्टदेशं नीत्वा । दक्षिणस्यान्दिशि चतुष्पथादौ निरस्यामीत्यर्थः । निरस्तश्च सन्निधौ यमराज्ञः षष्ठी श्रुतस्तत्सकाशमिति शेषः । प्राणानां प्राणपतेः स्वान्तरपुरुषस्य शरीराद्वियोगकरणसामान्यात्तत्त्वाद्यमराजस्य सकाशं स गच्छतु । समानशीलव्यसनेषु सख्यं । यतः । रिप्रवाहः रिप्रं पापं तत्सदृशस्य मृतशरीरस्य वोढा भस्मतां प्रापयितेत्यर्थः । इहैवास्मद्गृहे पवायंक्रव्यादादितरोऽन्यो हव्यवाहनो जातवेदाश्शान्तिकर्मार्थमुपात्तः । देवेभ्यः देवान् प्रति । हव्यमस्मत् प्रत्तं । वहतु प्रापयतु । प्रजानन् देशकालकर्माणि स्वबोधिकारमस्मद्भक्ततां वा विजानन् ॥

यो अग्निः क्रव्यात्प्रविवेश वो गृहमिमं पश्यन्नितरं जातवेदसम् ।
तं हरामि पितृयज्ञाय देवं स घर्ममिन्वात्परमे सधस्थे ॥ १० ॥

योऽग्निः । क्रव्यात् मांसादः । प्रविवेश प्रविष्टवान् । वः युष्माकं । गृहिणां गृहं । तं क्रव्यादन्देवं वह्निर्निष्कालयामीत्यर्थः । किमर्थं । पितृयज्ञाय श्मशानकर्मार्थमित्यर्थः । किं केनाभिप्रायेण । पश्यन् हरसीति चेत् । इममितरं जातवेदसं हव्यवाहं स पश्यन् पर्यालोचयन् । केनाभिप्रायेण पश्यन् घर्मं यज्ञं शान्तिलक्षणमिन्वात् । इन्वति व्याप्तौ । व्याप्नुयात् निर्वर्तयेत् । परमे प्रकृष्टे । सधस्थे सहस्थाने अस्मद् गृह इत्येनेनाभिप्रायेण तं हरामीति संबन्धः कार्यः ॥

यो अग्निः क्रव्यवाहनः पितॄन्यक्षदृतावृधः ।
प्रेदु हव्यानि वोचति देवेभ्यश्च पितृभ्य आ ॥ ११ ॥

योऽग्निः । क्रव्यवाहनः क्रव्यस्य पित्र्यस्य हविषो वोढा । पितॄन् प्रति प्रापयिता पितॄन् । यक्षत् यजति । ऋतावृधः ऋतस्य यज्ञस्य सत्यस्य वा वर्धयितॄन् स । हव्यानि हवींषि इमानि युष्मदर्थं मयानीतानीति प्रकथयतु देवेभ्यश्च पितृभ्यश्च । आकारः समुच्चयार्थे । इदु च पादपूरणौ ॥

उशन्तस्त्वया नि धीमह्युशन्तः समिधीमहि ।

उशन्नुशत आ वह पितॄन्हविषे अत्तवे ॥ १२ ॥

उशान्तमग्निः नि धीमहि नि हितवन्तो वयं कर्मार्थे स्थापितवन्तः कामयमानाः । समिधीमहि सन्दीपितवन्तश्च वयं कर्मार्थे यत पचमतः । उशंतं पिता गमनं कामयमानः आ गन्तु कामानावह आन्तिकं प्रापय । किमर्थं । हविषे अस्मत् प्रत्तस्य हविषः । अत्तवे अदनाय ॥

यं त्वमग्ने समदहस्तमु निर्वापया पुनः ।

कियाम्ब्वत्र रोहतु पाकदूर्वा व्यल्कशा ॥ १३ ॥

अस्थीन्यभ्युक्ष्य ग्रहण कालेऽग्निरुच्यते । यमस्मत् पितरं । हे अग्ने । समदहः सम्यग् दग्धवानासि । तमु तमेवास्मत्पितरं निर्वापय उपशमय प्रह्लादय । पुनः पश्चात् अस्थिग्रहणार्थमभ्युक्षणकाले किं च तव प्रसादात् प्रह्लादकद्रव्यं । कियांबु अत्र रोहतु । कियद्द्रव्यं व्यत्रास्तीति किमपि युतमिश्रितमंबुनेति कियांबु शैवालः । अत्रास्मिन् मत् पितृसंस्कारस्थाने । रोहतु उत्पद्यतां । पाकदूर्वा परिपक्वा वृद्धा दूर्वा चोत्पद्यतां । वि अल्कशा विविधस्तवका ॥

शीतिके शीतिकावति ह्लादिके ह्लादिकावति ।

मण्डूक्याऽसु सङ्गम इमं स्वग्निं हर्षय ॥ १४ ॥

अग्निप्रसादात्त्वमपि हे शीतिके ! बहून्यानि सन्तत्र पृष्ठे शीतिकावति शीतवति ह्लादिके । प्रह्लाद ह्लादिकावति प्रह्लादनवति । मण्डूक्यासु अतिवृष्टिप्रियासु । सं गम सुष्ठु संगच्छस्व । संगम्य च इममग्निमग्रत्यं सुहर्षय सुष्ठु ह्लादय स्वसंयोगेन ॥

सप्तदश सूक्तम् ।

उत्तरं सूक्तं त्वष्टा दुहित्र इति चतुर्दशार्चं । यामायनो देवश्रवा ददर्श । अस्याद्ये ऋचौ सरण्यू देवते । ततः पराश्चतस्रः पौष्ण्यः । तत उत्तरऋचं सारस्वतं । अब्देवताश्चतस्रो ऽवशिष्टा त्रिष्टुभौ ऽनिष्टुभः* पुरस्तो प्रसिद्धः ॥

---

*इहदेवतायां सर्वानुक्रमण्यां च चतुर्दशमन्त्ररयापि आपो देवता ।

त्वष्टा दुहित्रे वहतुं कृणोतीतीदं विश्वं भुवनं समेति ।
यमस्य माता पर्युह्यमाना महो जाया विवस्वतो ननाश ॥ १ ॥

दुहित्रे षष्ठ्यर्थे चतुर्थी। स्वस्या दुहितु सरण्यू नाम्न । वहतु वहन विवाह करोतीत्येतेन हेतुना सपरिवारार्थमिद । विश्व सर्व । भुवन भूतजात स एति । भूते लट् समागमत् सा च परि उह्यमाना परीत्येव उदित्यस्य स्थाने भूते लट् । उदूढा सती । यमस्य यम्याश्च। माता जननी सरण्यू । मह महत । विवस्वतो जाया भाया। तस्माद्वि वस्वता यम च यमीं च जनयित्वा त्यक्त्वा च। ननाश सवर्णामन्या प्रतिनिधायाश्व रूप कृत्वा उत्तरान् कुरून् प्रति नष्टा ॥

अपागूहन्नमृतां मर्त्येभ्यः कृत्वी सवर्णामददुर्विवस्वते ।
उताश्विनावभरद्यत्तदासीदजहादु द्वा मिथुना सरण्यूः ॥ २ ॥

अमृता अमृतधर्माणा ता दुहितर सरण्यू। मर्त्येभ्य । मनुष्येभ्य । अपागूहन् अप गूढितवन्त सवृता कृतवन्त । अपनीतवन्तो देवा आश्व रूप कृतवतीमुत्तरेषु कुरुषु नाशितवन्त इत्यर्थ । कृत्वी कृत्वा चान्या तत् सवर्णामददु दत्तवन्तो विवस्वते। सा च तेन सभक्ता सती। उत अपि। अश्विनौ अभरत् गर्भभूतौ स्वोदरे धारितवती जनित वतीत्यर्थ । यत्तदाश्व रूपमस्या । आसीत् अभूत्। तेन रूपेण अज हात्। उत्तर समुच्चये। इत्युक्तवती च विवस्वत एव सकाशे द्वौ मिथुनौ दुहितृपुत्रौ यमी यमौ सरण्यू ॥

पूषा त्वेतश्च्यावयतु प्र विद्वाननष्टपशुर्भुवनस्य गोपाः ।
स त्वैतेभ्यः परि ददत्पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः ॥ ३ ॥

। अनष्टपशु । भुवनस्य भूतजातस्य । गोपा गोप्ता रक्षिता । प्रच्यावयतु ? स एव पूषा त्वा एतेभ्य पितृलोकस्थेभ्य । परिददत् परिददातु । पितृभ्य अथवा स इत्युपरिष्टाग्निर्देह्यमाणो ऽग्निरुच्यते। प्रच्यावित पूष्णा सोऽग्निस्त्वामेतेभ्य परिददातु पितृभ्यो देवेभ्यश्च। सुविदत्रियेभ्य सुधनेभ्य ॥

आयुर्विश्वायुः परि पासति त्वा पूषा त्वा पातु प्रपथे पुरस्तात् ।

यत्रासते सुकृतो यत्र ते ययुस्तत्र त्वा देवः सविता दधातु ॥४॥

आयुर्वायु । वकारलोपेन पर्यायान्तर वा । कीदृशो वायु । उच्यते । विश्वायु सर्वगत । परिपासति परिपातु सर्वतो रक्षतु । पूषानुज्ञया । त्वा त्वा । प्रमित यजमान पूषा स्वयमेव त्वा पातु रक्षतु । प्रपथे प्रकृष्ट पथि स्वर्गमार्गे । पुरस्तात् स्थित इति शेष । यत्र आसते तिष्ठन्ति । सुकृत पुण्यकर्माण । यत्र वा ते सुकृतो युयु गता । तत्र स्थाने त्वा देवस्सविता पूषानुज्ञया दधातु स्थापयतु ॥

पूषेमा आशा अनु वेद सर्वाः सो अस्माँ अभयतमेन नेषत् ।
स्वस्तिदा आघृणिः सर्ववीरोऽप्रयुच्छन्पुर एतु प्रजानन् ॥ ५ ॥

पूषा इमा प्राच्याद्या । आशा दिश । अनु वेद अनु पूर्वेण जानाति । सर्वा क्षेम्यपथोपेता अक्षेम्यपथोपेताश्च । एव सति स पूषा अस्मान् प्रमिते यजमानो ब्रवीति पुत्रमुखेन ऋत्विङ्मुखेन वा । अभयतमेन अतिशयेन भयवर्जितेन । पथा नेषत् नयतु । कथ । स्वस्तिदा अविनाशस्य दाता सन् । आघृणि अगतदीप्ति । सर्ववीर सर्वै परिवारकर्वीरैरुपेत । अप्रयुच्छन् अप्रमाद्यन् । पुर एतु अस्माक पुरस्ताद् गच्छतु । प्रजानन् अस्मद् भक्तता विजानन् ॥

प्रपथे पथामजनिष्ट पूषा प्रपथे दिवः प्रपथे पृथिव्याः ।
उभे अभि प्रियतमे सधस्थे आ च परा च चरति प्रजानन् ॥६॥

अन्तरिक्षे गगनसाधनभूताना पथा मध्ये य प्रकृष्ट पन्था तत्र प्रपथे । अजनिष्ट जात । सुकृतिना सुगतिप्रापणार्थमवस्थित इत्यर्थ । पूषादेव । दिवश्च पथा मध्ये य प्रकृष्ट पन्था तस्मिन् प्रपथे पूषा प्रकृष्ट पथि सुकृतिना सुगतिप्रापणार्थ अजनिष्ट । एव प्रपथे पृथिव्या अजनिष्ट पूषा यत ईदृशोऽसावत द्यावा पृथिव्यो । प्रियतमे सर्व स्वेप्सतमे । सधस्थे सर्वस्य सहावस्थानभूते । अभि प्रति । आचरति च । परा चरति च । सुकृतिनामस्मदादीना सुकृतफलोपभोगाधिष्ठान् प्रदर्शनार्थं आगच्छति च पृथिवीप्रति । परा गच्छति दिव प्रति । अनेनेद कर्म कृत । अस्य कर्मण इद फल इति प्रजानन् । य ईदृश सोऽस्मान् प्रति मद्दृष्टेन पथा नयतु । सुकृतफलोपभोगायेत्याशीर्योज्या ॥

सरस्वतीं देवयन्तो हवन्ते सरस्वतीमध्वरे तायमाने ।
सरस्वतीं सुकृतो अह्वयन्त सरस्वती दाशुषे वार्यं दात् ॥ ७ ॥

सरस्वतीं मध्यमस्थानां । देवयन्तः देवान् यष्टुं स्तोतुञ्चेच्छन्तः । हवन्ते आह्वयन्ति । कर्मांगभावाय । सरस्वतीमध्वरे यज्ञे । तायमाने निर्वर्त्यमाने ह्वयन्ति कर्मांगभावार्थं सरस्वतीं । सुकृतः पुण्यफलप्रदानाय । अह्वयन्त आह्वयन्ति । यत एवमतः सरस्वती । दाशुषे हवींषि दत्तवते । यजमानाय मह्यं । वार्यं वरणीयं कर्मफलं । दात् ददातु ॥

सरस्वति या सरथं ययाथ स्वधाभिर्देवि पितृभिर्मदन्ती ।
आसद्यास्मिन्बर्हिषि मादयस्वानमीवा इष आ धेह्यस्मे ॥ ८ ॥

हे सरस्वति देवि । या त्वं सरथं । क्रियाविशेषणमेतत् । पितृभिस्सह समानेन रथेन । ययाथ गच्छसि । स्वधाभिरन्नैर्हविर्लक्षणैः । मदन्ती तृप्यन्ती । सा त्वमासद्य निषद्योपविश्य । अस्मिन् बर्हिषि वेदिस्तरणे । मादयस्व तर्पयात्मानं तृप्य वा । हविर्भिः तृप्ता च सती प्रत्युपकारार्थं । अनमीवा अरोगाः अरोग्यजननीः । इषः अन्नानि । आ धेहि मर्यादया यावदर्थं देहि । अस्मे अस्मभ्यं ॥

सरस्वतीं यां पितरो हवन्ते दक्षिणा यज्ञमभिनक्षमाणाः ।
सहस्रार्घमिळो अत्र भागं रायस्पोषं यजमानेषु धेहि ॥ ९ ॥

सरस्वतीं । यां त्वां । पितरः । हवंते आह्वयन्ति । दक्षिणा हविरादिदानानि । यज्ञं यागभावाय? । अभिनक्षमाणाः अभिगच्छन्तः व्याप्नुवन्तो वा । सा त्वं सहस्रार्घं बहुपूजनीयं । बहुत्वान्मृष्टत्वाच्च बहुभिः प्रशंसनीयं उपयोज्यं चेत्यर्थः । इळः अन्नस्य । भागं अङ्गं अंशं । रायः धनस्य पोषं पुष्टिञ्च बहुधनं चेत्यर्थः । इह अस्मिन् लोके कर्माणि वा वर्तमाने अस्मासु । धेहि धारय वा ॥

आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवी रुदिदाभ्यः शुचिरा पूत एमि ॥ १० ॥

सोमेषु दशमेऽहन्यनया शुद्ध्यर्थं प्रोक्षणं क्रियते । आपस्सर्वस्य मातरः मातृवदनुग्राहिकाः । अस्मान् शुन्धयन्तु प्रोक्षणेन शोधयन्तु ।

केनेव उच्यते । घृतेन । लुप्तोपममेतत् पदं । घृतेनेव घृतं सर्वस्य पावनशुद्ध्यर्थं प्राशानोपदेशात् । तस्मांभोऽजायत इति । एवमुच्यते । यथा घृतेन सर्वं पुनन्ति आपो घृतवश्च घृतेन सर्वस्य पावयित्र्यः । एवं नः अस्मान् पापापनोदादेव शोधयतु । कस्मादेवं ब्रूमः । हि यस्मात् । विश्वं सर्वं । रिप्रं पापं । प्रवहन्ति अपनयन्ति । देवीर्देव्य आपः । अत एवं ब्रूमः । अनन्तरं च आभ्य आपादानभूताभ्य* । उत् स्वर्गं प्रत्यूर्ध्वं गच्छामि । शुचिः सन् । आपूतः मर्यादया पूतः ॥

द्रप्सश्चस्कन्द प्रथमाँ अनु द्यूनिमं च योनिमनु यश्च पूर्वः ।
समानं योनिमनु सञ्चरन्तं द्रप्सं जुहोम्यनु सप्त होत्राः ॥११॥

अनयोत्तरया च सोमविप्रुषो जुहोति । अभिषूयमान[ण]स्य सोमस्य । द्रप्सो रसः । चस्कंद स्कन्नवाननुगतवान्यतोऽधिषवणचर्मणः । प्रथमाननु द्यून् प्रधानान् यागदिवसांश्च प्रति । इमश्चापरं सोमाभिषवप्रावलक्षणं । योनिं सोमस्य स्थानं कारणं वा । अनु प्रति स्कन्नवान् । तं सर्वप्रकारमपि । समानं साधारणं । योनिं स्थानलक्षणं स्थानमुक्तलक्षणं वा । सञ्चरन्तं प्रतिगतमित्यर्थ । द्रप्सं सोमरसं विप्रुड्†लक्षणं । वचनव्यत्ययः कार्यः । जुहुमः । कथं । अनु अनुपूर्वमित्यर्थः । कियन्तो जुहुमः । सप्तसंख्याका । विप्रु[द्] होमस्य कर्तारः यजमानादयः अध्वर्युपुरोगा । अथवाऽन्यथा योजनं क्रियते । हुत्वा चानूपसर्गश्रुतिसंयोगात्तथा प्रवृत्तिदर्शनाच्चाहवनीयप्रदेशादातीर्थदेशमनुलग्नाः सर्पाम इति वाक्यशेषः । कियन्तो वयमनुलग्नाः सर्पामः । सप्तके वयं होत्राः विप्रुद् होमस्य कर्तारः यजमानादय अध्वर्युपुरोगा ॥

यस्ते द्रप्सः स्कन्दति यस्ते अंशुर्बाहुच्युतो धिषणाया उपस्थात् ।
अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतम् ॥१२॥

यस्ते तथाभिषूयमाणस्य सोमस्य । द्रप्सो रसः । स्कंदति अभिषेचण [अधिषवण]चर्मणः अन्यत्र गच्छति । यश्च ते । अंशुः रसादितरः । सोम स्कन्दति । अध्वर्युपाठात् प्राचच्युत इत्यध्याहार्यं ।

* अपादानभूताभ्यः ? । † कोशे तु सर्वत्र विप्रुड् इति ।

बाहुच्युत इत्यस्य वाध्वर्योर्वेत्यनेन संबन्धः कार्यः । ग्रावच्युत अभिषवप्रवृत्तात् प्रच्युतः । कुतोऽन्यत्र स्कन्दति । धिषणाया उपस्थात् उपगम्य यत्र तिष्ठति सोमः । धिषणेति अकारवकारलोपेन लिङ्गवचनव्यत्ययेन चाधिषवणफलके उच्येते । धिषणयोरित्यध्वर्युपाठादधिषवणयोरुपस्थात् उपगम्य यत्र तिष्ठति सोमः । स तयोरुपस्थात् उपगम्य यत्र तिष्ठति सोमः । स तयोरुपस्थात् अधिषवणयोरवयवभूतात् सोमावस्थानप्रदेशादन्यतो गच्छतीत्यर्थः । अध्वर्योर्वाहुच्युतः असावध्वर्युस्सन् बाहुसम्बद्धाभ्यां वा[पा]णिभ्यां प्रच्युत अन्यतो गच्छति । परि वा य पवित्रात् । यस्सोमः पूयमानो दशापवित्राद्वा सर्वतः स्कन्दति । तं सोमं ते तव । सोमस्यावयवभूतं जुहोम्यग्नौ प्रक्षिपामि । कथं मनसा संकल्पमात्रेण । आज्यहोमे सोमविप्रुद्धोमं मनसा सन्धारयेत्यर्थः । वषट्कृतं स्वाहाकारप्रदानेन प्रयोज्य होमे सोमहोमसम्पादनाय मनसाभिसन्धानमात्रेण कृतं वषट्कारश्चेत्यर्थः ॥

यस्ते द्रप्सः स्कन्नो यस्ते अंशुरवश्च यः परः स्रुचा ।
अयं देवो बृहस्पतिः सं तं सिञ्चतु राधसे ॥ १३ ॥

यस्ते तवाभिपूयमाणस्य । द्रप्सो रसः । स्कन्नो गतोऽन्यत्राधिषवणचर्मणः । यश्च ते तवांशू रसादितरः लतावयवः । अवश्च यः अवमश्च यः स्वल्पश्च यः इत्यर्थः । परश्च यः प्रभूतश्च यः इत्यर्थः । तमुभयप्रकारमप्ययं देवो बृहस्पतिः । स्रुचा होममात्रेण संसिचतु सम्यक्क्षारयतु अग्नौ प्रक्षिपतु । किमर्थं । राधसे धनाय । अस्माकं दृष्टादृष्टफलाय इत्यर्थः ॥

पयस्वतीरोषधयः पयस्वन्मामकं वचः ।
अपां पयस्वदित्पयस्तेन मा सह शुन्धत ॥ १४ ॥

प्रत्यक्षकृतेयमृक् । शुंधतेति मध्यमपुरुषबहुवचनेनापामभिधानात् । अतस्सम्बोध्य कुरुतेत्येतत् पदमध्याह्रियते । हे आपः पयस्वतीरोषधयः पय उदकं वृष्टिलक्षणं युष्माकमवयवभूतं तेन तद्वतीः वृष्टियुक्ता ओषधीः कुरुत इति शेषः । किञ्च । पयस्वत् वृष्ट्याद्युदकवत् मासप्रार्थितवृष्ट्याद्युदकमित्यर्थः । मामकं मदीयं । वचः वृष्टि-

प्रार्थनवचनं स्तुतिवचन वा कुरुत । अपा वृष्टिलक्षणाना सम्बन्धि पय उदक भूमिष्ठ । पयस्वत् वृष्ट्युदकसंयुक्त यथा काल कुरुते । तेन चोदकेन सह । मा मां । शुधत शोधयत सस्कुरुत ॥

अष्टादशं सूक्तम् ।

उत्तर सूक्त परम्मृत्यविति चतुर्दशर्चं । यामायन सकुरुतो[*] ददर्श। तत्राद्याश्चतस्रो मृत्युदेवता ।पञ्चमी धातृदेवता।शेषा पितृमेध कर्माणि पठिता । तासा देवता प्रयोगवशाज्ज्ञेय । तत्र तत्र यथा कथञ्चित् शौनकेनालस्येनाशक्त्या वाऽनिरूपितत्वादहमत्र येन मन्त्रेण यद्द्रव्यमभिधीयते प्राधान्येन तद्द्रव्य तस्य मन्त्रस्य देवता इत्यनेन न्यायेनान्येन वा यथाप्राप्त देवतामभिव्यञ्जयिष्यामि ।

पर मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजा रीरिषो मोत वीरान् ॥१॥

देवान् प्रतिगमनमार्गात् पितृयाणे पथि जहि । अह तु देव याने पथि स्थित । अतो मा माञ्जिघासीरित्यभिप्राय । न च केवल मा किन्तर्हि । चक्षुष्मते पश्यते । शृण्वते च सर्वमप्रतिहतसर्वेन्द्रि यविज्ञानायेत्यर्थ । ते तुभ्य मृत्यवे । ब्रवीमि कथयामि । त्वामभ्यर्थ यामीत्यर्थ । किं उच्यते । न अस्माक । प्रजां दुहितृदौहित्रादिका । मा रीरिष मा हिंसी । मा उत मा च । वीरान् पुत्रपौत्रादीन् पुसो हिंसी ॥

मृत्योः पदं योपयन्तो यदैत द्राघीय आयुः प्रतरं दधानाः ।
आप्यायमानाः प्रजया धनेन शुद्धाः पूता भवत यज्ञियासः ॥२॥

मृत्यो स्वभूत पद । पद्यतेऽस्मिन्निति पद पितृयाण त योप यन्त विमोहयन्त परित्यजन्त इत्यर्थ । यत् यस्मात् । एत गतवन्तो यूय देवयानेन पथा यस्मान्मृत्यो स्वभूत पितृयाणप्रापक कर्म परि- त्यज्य देवयानप्राप्त कर्मणि प्रवृत्ता । द्राघीयो दीर्घतर प्रकृष्टतर च व्याध्यादिरहित । आयु जीवित । दधाना धारयन्त प्राप्नुवन्त इत्यर्थ । आप्यायमाना प्रवर्धमानाश्च । प्रजया पुत्रपौत्रादि कलया ? ।

* आपानुकमण्यां सर्वानुक्रमण्याश्च सङ्कुसुर इति पाठ ।

धनेन वा गवा च हिरण्यादिकेन जन्मान्तरसञ्चितदुरितक्षया-च्छुद्धा भवत । वर्तमानजन्मोपरितदुरितक्षयाच्च । पूता भवत यूयं । हे यज्ञियासः यज्ञसंपादिनो यजमानाः ॥

इमे जीवा वि मृतैराववृत्रन्नभूद्भद्रा देवहूतिर्नो अद्य ।
प्राञ्चो अगाम नृतये हसाय द्राघीय आयुः प्रतरं दधानाः ॥३॥

श्मशानकर्म कृत्वानन्तरमिमे जीवाः विमृतैराववृत्रन्नित्येतां पठन्तः सव्यं बाहुं प्रत्यावर्तमानाः प्रेन्यनपेक्षमाणा ? । इमे मृतस्य संबन्धिनो जीवा वयं पुत्रपौत्रादयः व्याववृत्रन् । प्रसव्यं व्यावृत्ता-स्संस्कुमः त्यक्षेमेण ? पराङ्मुखीभूता इत्यर्थः । मृतेः पञ्चम्यर्थे तृतीया । इमा मृतेभ्यः पितृभ्यः सूतश्च अभूत् । भूता सवृत्ता । भद्रा कल्याणी क्षेमकारी । देवहूतिः देवस्य यमस्य हूतिराह्वानं यत्र सा देवहूतिः । श्मशानक्रिया पितृमेधाख्या । इदानीं । प्राञ्चः प्राञ्चि-कार मकृष्यागत्यागान्तरा भूत्वा । अगाम गृहान् प्रति गच्छामो वयं । किमर्थं । नृतये । नृती गात्रविक्षेपे । स्वकर्मणि गात्रविक्षेपार्थं स्वकर्मा-नुष्ठानायेत्यर्थः । हसाय हसनाय च । हसनेन चात्र तत् पूर्वक्रीडा लक्ष्यते । पुत्रपौत्रादिभिः सह क्रीडनाय चेत्यर्थः । द्राघीयः दीर्घतरं प्रकृष्टतरं च व्याध्यादिरहितं । आयुर्जीवितं । दधानाः आत्मनि धारयन्तः प्राप्तवन्त इत्यर्थः ॥

इमं जीवेभ्यः परिधिं दधामि मैषां नु गादपरो अर्थमेतम् ।
शतं जीवन्तु शरदः पुरूचीरन्तर्मृत्युं दधतां पर्वतेन ॥ ४ ॥

स्तुतिः पादैः मध्यमं परिधिं परिदधाति । शान्तिकर्मणि चतु-र्थेन पादेनात्मानमुत्तरतोऽग्नेः कृत्वा । इमं मध्यमं परिधिं जीवेभ्यः । षष्ठ्यर्थे चतुर्थी । मृत्योर्मध्य इत्यध्याहार्यं । पुत्रपौत्रादिजीवानां मृत्योश्च मध्ये तिरस्करणार्थं दधामि स्थापयामि । किमर्थं । एषाम्मृ-तानां पितृणाम् । अर्थं पतं । अर्तेरर्थः ।* गतिरिहोच्यते । गतिमेतां मर-णाख्यां । अपरः अन्योऽपि पुत्रादिजीवः क्षिप्रमप्राप्ते काले । मा गात् मा प्रापत् । इत्यनेन प्रयोजनेन सर्वथा पुत्रादिजीवाः । कियन्तं कालं ।

* निरुक्त् १ । १८ ॥

शतं शरदः । कीदृशाः । पुरूचीः बह्वञ्चनाः स्वकार्यैरार्तवैश्शीतोष्ण-वर्षादिभिः नागतैतः बहुभिः प्राणिभिरनुगता यान्तर्दधतामन्तर्दधातु। व्यान्तर्हितं च कुर्वन्तु मृत्युं । केन । पर्वतेन पाषाणेन॥

यथाहान्यनुपूर्वं भवन्ति यथ ऋतव ऋतुभिर्यन्ति साधु ।
यथा न पूर्वमपरो जहात्येवा धातरायूंषि कल्पयैषाम् ॥ ५ ॥

यथा येन प्रकारेण । अहान्यहोरात्राणि । अनुपूर्वं अनुक्रमेण । भवन्ति परिवर्तन्ते । यथा च ऋतवः शरदादयः । ऋतुभिस्सह यन्ति गच्छन्ति । साधु शोभनं अविपर्यासेन । एवं यथा पूर्वं[पूर्व]कालीनं । अपरः अर्वाक्कुलीनो*ऽसत् कुलीन.*। न जहाति न परित्यजति पूर्व-मरणेन। एवमनेनोक्तेन प्रकारेण हे धातः। आयूंषि जीवितानि। कल्पय समर्थय कुरु । एषामसत् कुलीनानाम् ॥

आ रोहतायुर्जरसं घृणाना अनुपूर्वं यतमाना यति ष्ठ ।
इह त्वष्टा सुजनिमा सजोषा दीर्घमायुः करति जीवसे वः ॥६॥

त्वष्टृदेवतेयं। त्वष्टेत्यनिवासादित्या सूयाप्युच्यन्ते?। अत्र पुनः श्म-शानकर्मसम्बन्धादग्निरुच्यते । अनयाऽऽनडुहे चर्मण्यमात्य।नारोहयति शान्तिकर्मणि । अमात्यशब्देन स्वजन उच्यते । हे मृतस्य स्वजनाः पुत्रपौत्रादय. आनडुहे चर्मण्यारोहत । आयुर्जीवितं । जरसं घृणानाः शान्तिकर्माङ्गभूतमग्निं प्रार्थयमानाः। एवञ्चारोहत। अनुपूर्वं ज्येष्ठक्रमेण वर्णानुक्रमेण वेत्यर्थः । यतमानाः प्रयतमानाः संयतमानाः सम्पत्-माना वा परस्परेण संगच्छमाना वेत्यर्थः । यति स्थ यावन्तो भवथ यूयं तावन्तस्सर्वे एवेत्यर्थः । इह चर्मणि कर्मणि वा आरूढानां च सकान्त्वष्टाग्निः ? । सुजनिमा शोभनजन्मा । सजोषाः समानप्रीतिः समानवेनो वा । दीर्घमायुर्जीवितं। करति करोतु। जीवसे चिरञ्जीव-नाय । वः युष्माकम् ॥

इमा नारीरविधवाः सुपत्नीराञ्जनेन सर्पिषा सं विशन्तु ।
अनश्रवोऽनमीवाः सुरत्ना आ रोहन्तु जनयो योनिमग्रे ॥७॥

अनयर्चा सर्पिषा अक्षिणी अञ्जाना नारीः ईक्षते श्मशानकर्मा-

* कालीनः ।

नन्तरं। इमा मृतस्य सम्बन्धिन्यो नारीः नार्यः। अविधवाः जीवद्भर्तृकाः। सुपत्नीः शोभनभार्याः असतीत्वादिदोषरहिताः। आ अञ्जनेन। आङ् ईषदर्थे। ताः ईषदञ्जनेन घृतात्मकेनाक्षिणी स्वे स्वे अङ्क्तेति? शेषः। संविशन्तु। संवेशनमत्र सामर्थ्यात् गमनं। श्मशानात् गृहान् प्रति गच्छन्त्वित्यर्थः। अनश्रवः अश्रुवर्जिताः अरुदन्त्य इत्यर्थः। अनमीवाः अरोगा मानसदुःखवर्जिता इत्यर्थः। सुरत्नाः। रत्नमिति धननाम।* शोभनपरिधानादिधनाः सुखेपा? इत्यर्थः। आरोहन्तु प्रविशन्त्वित्यर्थः। जनयः जनयन्त्यपत्यमिति जनयोनार्यः। योनिं स्वगृहं। अग्रे प्रथमं। पुत्र्येः[पश्येयुः] ॥

उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष एहि ।
हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ ॥८॥

अनयर्चा चितितो मृतस्य पत्नीमुत्थापयति देवरः। वयस्यो वा जरद् गृहदासो वा। उत् ईर्ष्व। ईर्तिर्गत्यर्थः। उद्गच्छ उत्तिष्ठ चितित इत्यर्थः। हे नारि मृतस्य पत्नि। उत्थाय च त्वं गतासुमुत्क्रान्तप्राणमेतं पतिमुपशेषे उपस्वपिषि। एतस्य मृतस्य पते[त्युः]स्समीपे पार्श्वे निपद्यस्व इत्यर्थः। सा त्वञ्जीवलोकमभि एहि। जीवानां पुत्रपौत्रादीनां लोकं स्थानं गृहं प्रति आगच्छ। कस्मादेवमुच्यसे। यस्मात् हस्तग्राभस्य पाणिग्रहीतुः। दिधिषोः गर्भाधातुः सम्बन्धि। इदञ्जनित्वं जन्म। इमां वेदेपूत्पत्तिं गतमित्यर्थः। अभिनन्त्वभूथ अभिसम्भूतारि?त्वमध्यवसायमाभिर्णेव यस्माच्च पतिलोकं प्राप्तवती तस्मादेवं ब्रवीमीत्यर्थः ॥

धनुर्हस्तादाददानो मृतस्यास्मे क्षत्राय वर्चसे बलाय ।
अत्रैव त्वमिह वयं सुवीरा विश्वाः स्पृधो अभिमातीर्जयेम ॥९॥

अनयर्चा चरमपवस्थायति? क्षत्रियश्चेद्यजमानः। चितिस्थस्य मृतस्य हस्ताद्धनुराददानः। क्रिमर्थं। अस्मे अस्माकं। क्षत्राय क्षतत्त्राय प्रजापालनक्षत्रियत्वाय। वर्चसे ऐश्वर्यलक्षणदीप्तये च। बलयपारीराय? च सेनालक्षणाय च। आददान इति लक्षणार्थे शानच्छन्तप्रयोगात्? साकांक्षत्वात् ब्रवीमीति शेषः। किं ब्रवीमि। उच्यते। अत्रैव राष्ट्रे

* निघण्टुः २ । १० ॥

श्मशाने वा । सप्तमीनिर्देशात् स्थित्वेति शेषः । त्वञ्च यजमान इहैव राष्ट्रे श्मशाने वा स्थित्वा । वयं सुवीराः शोभनपुत्राश्च त्वदीयाः एते सर्वे एवं समुदितास्सन्तः अनेन धनुषा तेन विश्वास्सर्वाः । स्पृधः समिति अभिमातीर्जयेम अभिभवेमेत्याशास्महे ॥

उप सर्प मातरं भूमिमेतामुरुव्यचसं पृथिवीं सुशेवाम् ।
ऊर्णम्रदा युवतिर्दक्षिणावत एषा त्वा पातु निर्ऋतेरुपस्थात् ॥१०॥

अत उत्तराश्चतस्रः पृथिवीदेवताः । अस्थिकुंभमनया भूमौ निदधाति । हे अस्थिकुंभ ! अस्माभिर्भूमौ निधीयमानस्त्वं । उपसर्प उपगच्छ अनुप्रविश । मातरं सर्वस्य मातृभूतां । भूमिमेतां उरुव्यचसं पृथिवीमपि । विविधमञ्चनं गमनं व्यावचः तदुरु विस्तीर्णं यस्य असावुरुव्यचाः । तामुरु व्यचसंविस्तीर्णविविधपूजनाञ्चेत्यर्थः । पृथिवीं विस्तीर्णां । सुशेवां सुसुखां । उपसर्पयन्तं च सन्तम् । ऊर्णम्रदा ऊर्णेव मृद्वी सुकुमारा । युवतिः यौवनान्विता । दक्षिणावते । द्वितीयार्थे चतुर्थ्येषा । दक्षिणावन्तन्दत्तदक्षिणन्त्वामस्थिकुंभ रूपव[न्त] न्त्वा यजमानम् । एषा पृथिवी । पातु रक्षतु । कुत । निर्ऋतेः मृत्युदेवतायाः । उपस्थात् समीपस्थानात् ॥

उच्छ्वंच स्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना ।
माता पुत्रं यथा सिचाभ्येनं भूम ऊर्णुहि ॥ ११ ॥

पृथिवि ! मा निबाधथाः मा संपीडयेत्यर्थं । किञ्च । सूपाय[न]ा सूपगमना सूपसर्पेत्यर्थः । अस्मै अस्यास्थिकुंभस्यार्थाय भव त्वं । सूपवञ्चना । वञ्चू प्रलंभने । प्रलंभनं प्रतारणं । तेन चात्र तत् पूर्वकं प्रतिष्ठापनं लक्ष्यते । सूपप्रलंभना, सुप्रतिष्ठा च भव इत्यर्थः । किञ्च । माता पुत्रं बालकं । यथा वस्त्रान्तेनाच्छादयति । एवमेनमस्थिकुम्भं । हे भूमे । अभ्यूर्णुहि आभिमुख्येनाच्छादय ॥

उच्छ्वञ्चमाना पृथिवी सु तिष्ठतु सहस्रं मित उप हि श्रयन्ताम् ।
ते गृहासो घृतश्चुतो भवन्तु विश्वाहास्मै शरणाः सन्त्वत्र ॥१२॥

पांसुभिः प्रच्छादयोत्तरामेनां पठति ॥ उत् श्वंचमाना ऊर्ध्वं गच्छन्ति । अस्थिकुंभमधष्टभ्यापीडयन्तीत्यर्थः । पृथिवी सु तिष्ठतु

सु प्रतिष्ठिता भवतु । किञ्च पार्थिवाः पांसवः। सहस्रमित । सहस्रमिति तृतीयार्थे प्रथमा। मित इति च बहुवचनस्य स्थाने एकवचनं। सहस्रेण* सम्मिताः बहुसंख्यायुक्ताः अनन्ता इत्यर्थः। उप हि श्रयन्तां । हि निपातः पादपूरणोऽत्र। उपश्रयन्तामस्थिकुंभमाश्रयन्तु संपरिवार्य तिष्ठन्त्वित्यर्थः। किञ्च ते पांसवः । गृहासः अस्थिकुंभस्य गृहभूताः। घृतश्चुत घृतस्योदकस्य सर्पिषो वा† क्षारयितारः अस्थिकुंभस्योपरि स्रवितारः। भवन्तु भवन्त्वित्यर्थः। किंच विश्वाहा सर्वदा। अस्मै अस्यास्थिभूतस्य । शरणाः सन्तु आश्रयभूता भवन्तु। अत्र आर्ष्मेल्लोके ॥

उत्ते स्तभ्नामि पृथिवीं त्वत्परीमं लोगं निदधन्मो अहं रिषम् ।
एतां स्थूणां पितरो धारयन्तु ते ऽत्रा यमः सादना ते मिनोतु ॥१३॥

अनयाऽस्थिकुंभं कपालेनापिदधाति । ते तवास्थिकुंभस्यापिधानत्वेनु? संबन्धिनीं। पृथिवीं कपाललक्षणां। उत् स्तभ्नामि। स्तभिरुकभि प्रतिबन्धे। प्रतिबध्नामि। त्वत् परि। पष्ठ्यर्थेऽत्र पञ्चमी। उपरिशब्दस्य च उकारलोपः। त[व]ास्थिकुंभस्य तवोपरि तव संबन्धिना कपालेन त्वामपिदधामीत्यर्थः। किञ्च इमं लोहं‡ लोष्टं कपाललक्षणं। निदधत् अस्थिकुंभस्योपरि स्थापयते। अह मो रिषं मा हिंसीमम केनचित्। किंच एतां मया निहितां । स्थूणां कपाललक्षणं[ां]। पितरः प्रेता इतरे वा। धारयन्तु निश्चलां कुर्वन्तु। ते तवास्थिकुंभस्य संबन्धिनीं। किञ्च अत्र अस्यां भूमौ। यम पितृपतिः। सदना द्वितीयैकवचनस्यायं छान्दस आकारः। सदनं स्थानं। ते तवास्थिकुंभस्य। मिनोतु परिच्छिनत्तु अनुजानात्वित्यर्थः॥

प्रतीचीने मामहनीष्वाः पर्णमिवा दधुः ।
प्रतीचीं जग्रभा वाचमश्वं रशनया यथा ॥ १४ ॥§

प्रतीचीने प्रतिगते संप्राप्ते। अहनि अस्थिसञ्चयनदिवसे। मामस्थिकुंभरूपं यजमानमा दधु त्वयि भूमावाहितवन्तः पुत्रपौत्रादयोऽधि[कृ]त[वन्त]ाः।

* सहस्रेण—कोशपाठ ।　　† क्षारयितार—कोशपाठ ।

‡ नग्वेदस्य सर्वमुद्रितपुस्तकेषु 'लोग' इति पाठो वर्तते। असमत्पुस्तकालयस्थप्राचीनकोशेष्वपि तथैवास्ति पाठः । तैत्तिरीयारण्यकस्य कलिकत्तामुद्रितपुस्तके ६।७।३॥ "लोक" इति पाठ. सम्पादकसम्मत ।

§ मोक्षमूलरसम्पादित सायणभाष्येऽस्य मन्त्रस्य भाष्य विलुप्तमस्ति ।

किमिहाभिहितवन्तः। इष्वाः पर्णमिव। यथा केचिदिषुकाराः इष्वाः संबन्धि पर्णं वाजाख्यं सुश्लिष्टमिषा वा दधति एवमेतज्ज्ञात्वा । प्रतीचीं त्वां प्रतिगतां प्रार्थनाद्वारेण त्वत् कर्णपथं प्राप्तां । वाचं प्रार्थनारूपाम्। एषा त्वा पातु निर्ऋतेरुपस्थात् ।* उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः सूपायनास्मै भव सूपवञ्चना ।† इत्यादिकामविकृतसत्कारां। जग्रभ गृहाण। किमिव। अश्वं रशनया रज्वा यथा कश्चिद् गृह्णीयात् एवं गृहाण कर्तव्यत्वेन। मनसि कुर्वित्यर्थः। अथवा मृतस्य‡ पुत्रो ब्रवीति। प्रतीचीने प्रतिगते। अद्याहनि। मां मृतस्य पुत्रम् । इषु श्मशानकर्मणि कर्तव्ये महताद्रेण श्लिष्टमाहितवन्तः अधिकृतवन्त ऋत्विगादयः स्मृतिकारा वा। किमिवा इषुः। इष्वास्संबन्धि पर्णं वाजाख्यं यथा कोचिदिषुकाराः पर्णं सुश्लिष्टमिषा वा दधति एवमेतज्ज्ञात्वा पृथिवी । प्रतीचीं प्रार्थनाद्वारेण त्वत्कर्णपथं प्राप्तां। वाचं प्रार्थनारूपां। एषा त्वा पातु निर्ऋतेरुपस्थात् ।*उच्छ्वञ्चस्व पृथिवि मा नि बाधथाः।† इत्यादिकां जग्रभ गृहाण कर्तव्यत्वेन। किमिव। अश्वं रशनया यथा कश्चिद् गृह्णात्येवं ॥

[ एकोनविंशं सूक्तम् ]

उत्तरं सूक्तं नि वर्तध्वमित्यष्टर्चं गोदेवतं अग्देवतं वा । भृगुर्वारुणि र्भार्गवश्च्यवनो वा यामायनो वा मथितो ददर्श॥

नि वर्तध्वं मानु गातास्मान्त्सिषक्त रेवतीः ।
अग्नीषोमा पुनर्वसू अस्मे धारयतं रयिम् ॥ १ ॥

हे गावः आपो वा। यूयमन्यतो गच्छन्त्यः नि वर्तध्वमस्मान् प्रति। मानु गात स्वतेऽन्यं पुरुषं। एतन्मयोक्तं श्रुत्वास्मानेव सिषक्त वाहनदोहनस्नानपानादिद्वारेण सेवत§। हे रेवतीः। व्रीह्यादिधनेन धनवत्यः व्रीह्यादिधनसहितास्सेवध्वमित्यर्थः। हे अग्नीषोमौ पुनर्वसू । पुनः पुनर्वस्तारौ स्तोतृणां यद्दृणाच्छादयितारौ युवामपि। अस्मे अस्मासु।§§ धारयतं स्थापयतं। रयिं धनं। गोलक्षणमन्यल्लक्षणं वा। व्रीह्यादिधनसहितमिति सामर्थ्यात् पूर्ववद्योज्यं । एवमग्रार्द्धे ॥ इदं देवताकाराभिप्रायेणाग्नीषोमयोर्गुणभाव प्रधानभावो वा कल्प्यः ॥

* ऋ० १० । १८ । १० । † ऋ० १० । १८ । ११ । ‡ म्यतस्य—कोशपाठः। § सेवत ? §§ अस्मास्त—कोशपाठः। ॥ बृहद्देवता ७ । २० ॥

पुनरेना नि वर्तय पुनरेना न्या कुरु ।
इन्द्र एणा नि यच्छत्वग्निरेना उपाजतु ॥ २ ॥

आत्मनैवात्मानं संप्रेषयति । हे मदीयान्तरात्मन् अन्यतो गच्छन्तीरेना गाः अपो वा वृष्टिलक्षणाः । पुनः पुनर्नि वर्तय मादाः । निवर्त्य च । पुनः पुनरेनाः । नि आ कुरु नियताः कुरु । आत्मायत्ताः कुरु । इन्द्रश्च तव सहायभूतः एना नियच्छतु । त्वदायत्ताः करोतु । अग्निश्च एनाः । उपाजतु उपगमयतु । उपक्षिपतु वा । उपयोग्याः करोत्वित्यर्थः ॥

पुनरेता नि वर्तन्तामस्मिन्पुष्यन्तु गोपतौ ।
इहैवाग्ने नि धारयेह तिष्ठतु या रयिः ॥ ३ ॥

पुनः पुनरेता मां प्रति निवर्तन्तां मम भवन्त्वित्यर्थः । भूत्वा चास्मिन् मयि । गोपतौ गवां सास्नादिमतीनामपां वा वृष्टिलक्षणानां स्वामिनि स्वत्वेन स्थिरत्वा नित्यं । पुष्यन्तु पुष्टा भवन्तु । पुष्टाश्च सतीः । इहैवास्मिन्नेव मयि गोपतौ । हे अग्ने नि धारय नियमेन स्थापय । इहैव मयि गोपतौ । या रयिः यदपि धनं व्रीह्यादिकञ्च चि(?) गोसहितं तिष्ठतु ॥

यन्नियानं न्ययनं संज्ञानं यत्परायणम् ।
आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ॥ ४ ॥

गवान्नियान्नियमेन यान्त्यत्रेति नियानं स्थानं गोष्ठाख्यं । यच्छब्दयोगात्तच्छब्दो ऽध्याहार्यः । हुव इति च क्रियापदं । सर्वतो ऽनुषक्तव्य । तदपि हुवे आह्वयामि । आह्वानमभिमुखकरणं । तेन चात्र तत्पूर्विका प्रार्थना लक्ष्यते । गोसहितं प्रार्थय इत्यर्थः । नि अयन यदपि गवाश्चरित्रं गतानान्नियमेन गृहप्राप्तिलक्षणं तदपि प्रार्थये । यदपि गवां संज्ञानं सम्यग् ज्ञायते ऽनेनेति संज्ञानं । शबलादिचिह्नस्थानम् वा । तदपि प्रार्थये । यदपि गवां परायणं परागमनञ्चरित्रं वनं प्रतिगमनं तदपि प्रार्थये । यदपि गवामावर्तनं वने चरितुमितश्चेतश्च प्रवर्तनं तदपि प्रार्थये । यदपि गवाञ्चरित्वा गृहान् प्रति निवर्तनं तदपि प्रार्थये । यो ऽपि । गोपाः गोपालकः । तमपि । हुवे प्रार्थये । सर्वगुणोपेता गाः प्रार्थय इत्यर्थः ॥

य उदानड्व्ययनं य उदानट्परायणम् ।
आवर्तनं निवर्तनमपि गोपा नि वर्तताम् ॥ ५ ॥

यो गोपाः । उत् । आनट् व्याप्नोति । वि अयनं विविध[गम]नं। गवां नष्टानामन्वेषणार्थमितश्चेतश्च भ्रमणमित्यर्थः । यश्च गोपालः । उदानट् व्याप्नोति अनुभवति । किं । परायणं परागमनं । गोभिस्सहाभवौ*प्रतिचारणाय गमनमित्यर्थः । यश्च गोपाल आवर्तनमनुभवति । गोभिश्चरन्तीभिश्चेतश्चे[तश्च] भ्रमणमित्यर्थः । यश्चाभवीतो† गोभिस्सह गृहान् प्रतिनिवर्तनमनुभवति । सोऽपि गोपा गोपालो गोभिस्सह [वन]तो गृहान् प्रति निवर्ततां क्षेमेणागच्छत्वित्यर्थः ॥

आ निवर्त नि वर्तय पुनर्न इन्द्र गा देहि ।
जीवाभि र्भुनजामहै ॥ ६ ॥

आ निवर्त आ निवर्तेत्यर्वागर्थे । अर्वागस्मदभिमुखान्निवर्तस्व । त्वं हे इन्द्र अस्मदभिमुखो भवेत्यर्थः । भूत्वा चान्यतो गच्छन्तीर्निवर्तयास्मदभिमुखं कुरु । कृत्वा च । पुनः पश्चात् । नः अस्मभ्यं । हे इन्द्र गाः । देहि त्वं दत्ताभिश्च गोभिः जीवाभिः चिरञ्जीविभिः सर्वेञ्जीवयन्तीभिर्वा । भुनजामहै देवपितृमनुष्यानस्मांश्च संभोजयेम । सं पुष्णीमेत्याशास्महे ॥

परि वो विश्वतो दध ऊर्जा घृतेन पयसा ।
ये देवाः के च यज्ञियास्ते रय्या सं सृजन्तु नः ॥७॥

वः युष्माकं गवां संबन्धिना । ऊर्जा अन्नेन हविर्लक्षणेन । घृतेन च । पयसा च क्षीरेण च । विश्वतः विश्वान् सर्वान्देवपितृमनुष्यान् । परिदधे सन्धारयामि पुष्णामि । नात्मानमेव केवलं एतज्ज्ञात्वा ये के च देवा यज्ञियाः यज्ञसंप[द्]र्हास्ते । रय्या धनेन गोलक्षणेन । सं सृजन्तु संयोजयन्तु । न अस्मान् । अनुग्रहबुद्ध्या स्वमुपनमन्तीषु गोषु व्याघातं मा कार्षुरित्यर्थः ॥

आ निवर्तन वर्तय नि निवर्तन वर्तय ।
भूम्याश्चतस्रः प्रदिशस्ताभ्य एना नि वर्तय ॥ ८ ॥

---

* °सहाटवीं ? † यश्चाटवीतो ?

आकारो वर्तयेत्यनेनाख्यातेन संबन्धयितव्यः । हे मदीय कर्मात्माभिमुखमा वर्तय गाः । स्तुत्या यागेन च प्रसाद्योपनामयेत्यर्थः । यूयमपि हे गावः ! प्रसाद्यमानाः निवर्तनं निवर्तध्वं । प्रसाद्योपनमतेत्यर्थः। किं च । उपगम्य पश्चात् गोपालंभनकर्मक्षयात् अप गच्छन्तीर्गाः पुनरपि स्तुत्या यागेन च प्रसाद्य निवर्तय । अनिवर्तमानाश्च । यूयमपि हे गाव ! निवर्तन निवर्तध्वं पुनरपि प्रसाद्योपनमतेत्यर्थः। कुतो निवर्तयामि निवर्तामहे चेति पृष्ट उच्यते । भूम्याः पृथिव्यास्संबन्धिन्यायाः । चतस्रः प्रदिशः प्रकृष्टा दिशः प्राच्याद्याः ताभ्यो दिग्भ्यः । एना गाः सर्वदिक्काः निवर्तय निवर्तयध्वं यूयमिति सामर्थ्याद्ध्याहार्यं । अब्देवतापक्षेऽपि सूक्तार्थो यथा घटते तथा योजना कर्तव्या ॥

[ विंश सूक्तम् ]

उत्तरं सूक्तं भद्रन्न इति दशाक्षरमेकपादयुक्तं शान्त्यर्थं मनो देवतं शान्तिकर्म । देवः प्राजापत्यो वा विमदो ददर्श । अनेन सूक्तेन शान्त्यर्थं यत् कर्म क्रियते जपलक्षणं होमलक्षणं वा तदुच्यते ॥

भद्रं नो अपि वातय मनः ॥ १ ॥

प्रजापतिर्वा आपि वातयेति । हे शान्तिकर्म प्रजापते वा । भद्रं कल्याणमनर्थशान्तिलक्षणं धर्मार्थकामादिलक्षणं च । नः अस्माकं संबन्धि । मनः । मनसाऽत्र मन आदिसर्वकरणानामधिष्ठात[ा]भोक्तृपुरुषो लक्ष्यते । तस्य सुखदुःखफलसंबन्धान्मन आदि सर्वकरणानामधिष्ठातारं सुखदुःखफलस्य भोक्तारं पुरुषमित्यर्थः । अपि वातय । अपिरत्र धात्वर्थानुवादी । गमय प्रापयेत्यर्थः ॥

घनवासी विनिर्गताचार्यस्य उद्गीथस्य कृता ऋग्वेदभाष्ये चतुष्पञ्चाशो ऽध्यायः समाप्तः ॥ *

---

* सायणीये ऋग्वेदभाष्ये ऽष्टादशसूक्तान्ते चतुःपञ्चाशाऽध्यायपरिसमाप्तिप्रदर्शको लेखो विद्यते । तथा च कात्यायनादिमतमभ्युपगच्छता सायणेन—भद्रं नो—इत्येकपदा दशाक्षरा ऋक् विंशे सूक्ते ऽन्तर्गता स्वीकृता । भद्रं नो—इत्यत्र आचार्येणोद्गीथेन तु पृथक्सूक्तत्व मतम् । अतो ज्ञायते यथा सायणेन शाकलशाखा व्याख्याता, तथा उद्गीथेन काचिदन्या अनुपलभ्या ऋक्शाखा व्याख्याता स्यात् ।

[ एकविंशं सूक्तम् ]

उत्तरं सूक्तमाग्नेयम् । ऐन्द्रः प्राजापत्यो वा विमदो ददर्श ॥

अग्निमीळे भुजां यविष्ठं शासा मित्रं दुर्धरीतुम् ।
यस्य धर्मन्त्स्व१रेनीः सपर्यन्ति मातुरूधः ॥ १ ॥

अग्नि महमीळे । ईळस्तुतौ । स्तौमि । कीदृशं । भुजां हविर्भुजां देवानां मध्ये । यविष्ठं युवतमं । अग्निहोत्रादिकर्मार्थमहन्यहनि जायमानत्वादतिशयेन युवानमित्यर्थः । अथवा भुजां भोक्तव्यानामाहुतीनां मिश्रयितृतमं । इतरेषां देवानां तं दुःखत्वादतिशयेनात्तारमित्यर्थः । शासा अनुशासनेन हेतुना । मित्रं यस्मादिदं कर्तव्यमिदन्न कर्तव्यमिति सर्वमनुशास्ति तस्मात् सर्वस्य स्निग्धभूतश्चेत्यर्थः । दुर्धरीतुं दुर्धरं च दुर्निवारं शत्रुभिर्युद्धकाले । अथवा ग्रामदाहे वनदाहे च । किञ्च यस्याग्ने स्सबन्धि धर्मन् कर्मणि अग्निहोत्रादिके । स्वः सर्वदेवजातं दिवम् आदित्यं वा । एनीः देवान् प्रतिगच्छन्त्य आहुतयः । सपर्यन्ति स्थितिकरणद्वारेण परिचरन्ति सेवन्ते । अथवा स्वः स्वर्यन्तीत्यर्थः । एनयोस्सामानाधिकरण्यं । स्वरिति चायमत्र सर्वपर्यायः निपात स्वः सर्वे देवाः । एनीः आत्मानं प्रतिगरणाय गुन्ती [गन्त्री]राहुतो स्तुतीश्च । सपर्यन्ति परिचरन्ति । सेवन्ते उपजीवन्तीत्यर्थः । किमिव । मातुरूधः । लुप्तोपममेतत् । यथा मातुर्गोरूधः क्षीरोपसंहारस्थानं वत्सा उपजीवन्ति । एवं तमग्निमीळे इति संबन्धः कार्यः ॥

यमासा कृपनीळं भासाकेतुं वर्धयंति । भ्राजते श्रेणिदन् ॥२॥

यमग्निं । आसां उपासनेन स्तुतिभिर्हविर्भिश्च सेवनेन । कृपनीळं कर्मस्थानं । सर्वकर्माधारमित्यर्थः । भासाकेतुं ज्वालालक्षणं । पत[द्]दीप्तिपताकं । दीप्तेः कर्तारं वा । शरीरेण वीर्येण च । स्तोतारो यष्टारश्च । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । सोऽग्नि र्भ्राजते दीप्यते । सर्वत्र कर्मार्थे । कीदृशः । श्रेणिदन् ज्वाला…॥

अर्यो विशां गातुरेति प्र यदानड्दिवो अन्तान् ।
कविरभ्रं दीद्यानः ॥ ३ ॥

अर्य स्वामी सर्वस्या[ग्]नः ? विशां यजमान[नां] मनुष्याणां च । गातुः विशिष्टगतिरग्निः । किञ्च । यत् यदा । दीद्यानः

दीप्यमानः । पति ऊर्ध्वं गच्छति । तदा प्रानद् प्रकर्षेण व्याप्नोति । तेजसा किं नि[दि]वः ? द्युलोकस्य अन्तान् पर्यन्तान् । कवि-र्मेधावी । अभ्रमत्रान्तरिक्षोपलक्षणं । अत्रोपलक्षितमन्तरिक्षञ्च व्याप्नोतीत्यर्थः ॥

जुषद्धव्या मानुषस्योर्ध्वस्तस्थावृभ्वा यज्ञे ।
मिन्वन्त्सद्म पुर एति ॥ ४ ॥

जुषत् सेवमानः । भक्षयन्नित्यर्थः । हव्या हवींषि । मानु-षस्य यजमानमनुष्यस्य । स्वभूते यज्ञे । ऊर्ध्वः तस्थौ तिष्ठति । ऊर्ध्वं-ज्वलतीत्यर्थः ॥॥

[ द्वाविंशं सूक्तम् ]

कुह श्रुत इन्द्रः कस्मिन्नद्य जने मित्रो न श्रूयते ।
ऋषीणां वा यः क्षये गुहा वा चर्कृषे गिरा ॥१॥

चर्कृषे प्रथमस्य स्थाने यः—मध्यमः । करोतेः क्रियासामान्य-वचनत्वात् । करोतिश्चात्र स्तुतिक्रियायां वर्तते । अत्यर्थं स्तूयत इत्यर्थः । गिरा स्तुतिलक्षणया वाचा । स इन्द्रः । श्रुतो विख्यातः । कुह क स्थाने स्थितः । अद्य श्रूयते । कस्मिन् वा यजमानजने इज्यत्वेन स्तुत्यत्वेन स्थितोऽद्य श्रूयते । किमिव । मित्रो न मित्र इव । आदित्य इव । स्निग्ध इव वेत्यर्थः ॥

ते शतं शतं भूमीरुत स्युः । न त्वा वज्रिन् सहस्रं सूर्या अनुजातमष्ट रोदसी ।*इत्यादिकया अतिस्तुत्यापि समानगुण इत्यर्थः ॥

महो यस्पतिः शवसो असाम्या महो नृम्णस्य तूतुजिः ।
भर्ता वज्रस्य धृष्णोः पिता पुत्रमिव प्रियम् ॥ ३ ॥

य इन्द्रः । महः महतः । शवसः बलस्य सेनाख्यस्य । पतिः स्वामी । कीदृशः । असामि आ मर्यादया असमातः । अनन्तगुण इत्यर्थः । मह महतः । नृम्णस्य शारीरस्य च बलस्य ॥

युजानो अश्वा वातस्य धुनी देवो देवस्य वज्रिवः ।
स्यन्ता पथा विरुक्मता सृजानः स्तोष्यध्वनः ॥ ४ ॥

हे वज्रिवः वज्रिन् इन्द्र । यस्त्वं देवः स त्वं । युजानः स्व रथे अयुञ्जन् । अश्वा अश्वौ । कीदृशौ । वातस्य देवस्य । धुनी जलेन जवेन वा कंपयितारौ अभिभवितारौ । वातादपि बलवत्तरौ वेत्यर्थः । शीघ्रतरौ । स्यन्ता गच्छन्तौ । पथा स्वर्गमार्गेण । कीदृशेन । विरुक्मता विरोचनवता विविधदीप्तियुक्तेन । सृजानः अध्वन उत्पादयन् । स्वरथनेमा रथमार्गान् । स्तोषि स्तूयसे सततं श्रेयोऽर्थिभिः ॥

त्वं त्या चिद्वातस्याश्वागा ऋज्रात्मना वहध्यै ।
ययोर्देवो न मर्त्यो यन्ता नकिर्विदाय्यः ॥ ५ ॥

यच्छब्दसंबन्धात्तुत्तरोऽर्द्धर्चः पूर्वं व्याख्यायते । ययोरश्वयोः । यन्ता गन्तुं प्रवृत्तयोर्नियन्ता निवारयिता । न देवः । नापि मर्त्यो मनुष्यः । नकिः न कश्चित् । विदाय्यः वेत्ता बलस्य जवन्त मिति शेषः । त्वं हे इन्द्र । त्या चित् तावपि तादृशावपीत्यर्थः । तस्य बलेन जवेन च युक्ताविति शेषः । अश्वा आत्मीयावश्वौ । ऋज्रा ऋजुगामिनौ । आ अगाः आ गच्छसि । त्मना सारथिनिरपेक्ष इत्यर्थः । किमर्थं प्रति गच्छानि । उच्यते । वहध्यै वाहनाय । अभिप्रेतदेशप्रापणाय नियमनाय वेत्यर्थः ॥

अध ग्मन्तोशना पृच्छते वां कदर्था न आ गृहम् ।
आ जग्मथुः पराकाद्दिवश्च ग्मश्च मर्त्यम् ॥ ६ ॥

* ऋ० ८।७०।५॥

यज्ञे निर्वृत्ते अथ अनन्तरं । गमन्ता स्वस्थानं प्रति गच्छन्तौ । उशनाः । द्वितीयार्थे प्रथमैषा । उशनसञ्च त्वत्सखं त्वां चेन्द्रं । यां युवां संवृत्तौ सन्तौ । पृच्छते कृतार्थमात्मानं मन्यमानः परितोषात् पृच्छति । सर्वो यजमानः अनेनोच्यमानप्रकारेण* । कदर्था किमर्थौ । केनार्थेनार्थिनौ सन्तौ । नः अस्माकं स्वभूतं । आ गृहं । आङत्र प्रतीत्यस्यार्थे । गृहं प्रति मर्त्यलोकं प्रति । आ जग्मथुः आगतवन्तौ स्थ । पराकात् दूरात् । कुतो दूरात् । दिवः च ग्मः च । द्युतश्च पृथिवीतश्चेत्यर्थः । युवयोः कृतार्थत्वादिहागमनमस्मदनुग्रहार्थमेव न स्वार्थमिति पृच्छतीत्यर्थः ॥

आ न इन्द्र पृक्षसेऽस्माकं ब्रह्मोद्यतम् ।
तत्त्वा याचामहेऽवः शुष्णं यद्धन्नमानुषम् ॥ ७ ॥

हे इन्द्र । आ पृक्षसे नः । आङत्र मर्यादायां । मर्यादया आपृक्तेरित्यर्थः । संपर्चयात्मना भक्षयेत्यर्थः । अस्माकं स्वभूतं । ब्रह्म अन्नं हविराख्यं । नः तृतीयार्थे षष्ठी । चतुर्थी द्विती[या]यां चैषा । अस्माभिस्तुभ्यं दातुं उद्यतं उत्क्षिप्तं दत्तमित्यर्थः । भक्षितवन्तं च सन्तं त्वां तत् । याचामहे प्रार्थयामहे । अवः अन्नं रक्षणं वा यदुत्कृष्टं इति शेषः । शुष्णं बलञ्च याचामहे । यत् हन् हन्ति । अमानुषं मानुषादन्यं राक्षसादिकं बलञ्चोत्कृष्टं प्रार्थयामह इत्यर्थः । अथवा न इत्येतद् अव इत्येतेन संबध्यते । एष च योजना कर्तव्या । तत्त्वा याचामहे । नः अस्माकं । अवः पालनं । कीदृशं । उच्यते । शुष्णं शुष्णनामानं । यत् हन् हतवान् । अमानुषममानुषादितरमसुरमित्यर्थः । शुष्णमसुरं हत्वा येन पालनेन त्रैलोक्यं पालितवानसि । तत् पालनमस्माकं त्वां याचामह इति वाक्यशेषः ॥

अकर्मा दस्युरभि नो अमन्तुरन्यव्रतो अमानुषः ।
त्वं तस्यामित्रहन्वधर्दासस्य दंभय ॥ ८ ॥

अकर्मा अविद्यमानकर्मा निष्क्रिय इत्यर्थः । दस्युः । नः अस्माकम् । अभि अमन्तुः आभिमुख्येन स्वरूपतः अज्ञाता । अथवा अयोपसर्गस्य यकारलोपोऽत्र द्रष्टव्यः । अयमन्तुः । अयमन्ता परिमरिता ।

* ॰नोच्यमानेन प्रकारेण—इति पुस्तकान्तरपाठः ।

अन्यव्रतः श्रुतिस्मृतिविहितकर्मणोऽन्यकर्मा प्रतिषिद्धकर्मा । अमानुष मानुषादन्यः मनुष्यसंव्यवहाराद् बाह्यः । राक्षसवृत्तिरित्यर्थः । य ईदृशः । तस्य दासस्य उपक्षपयितव्यस्य । त्वं हे अमित्रहन् भक्तजनस्य शत्रूणां हन्तः । वधः हन्ता सन् । दंभय हिन्धि तमिति शेषः । अथवा वध इति वज्रनाम ।* तस्य वज्रं दंभय गमय । तं वज्रेण जहीत्यर्थः ॥

त्वं न इन्द्र शूर शूरैरुत त्वोतासो बर्हणा ।
पुरुत्रा ते वि पूर्तयो नवन्त क्षोणयो यथा ॥ ९ ॥

त्वं नः अस्मान् । हे इन्द्र शूर । शूरैः मरुद्भिस्सह सामर्थ्यात् पालयेति शेषः । उत अपि । त्वोतासः त्वया ऊता रक्षितास्सन्तो वयं । बर्हणा परिवृद्धेन ईप्सितार्थप्रदानेन त्वदीयेन तव प्रसादयुक्ता स्यामेति शेषः । कस्मादेवं ब्रूमः । यस्मात् पुरुत्रा पुरुभ्यो बहुभ्य स्तोतृभ्यो यष्टृभ्यश्च दत्तास्सत्यः । ते तव स्वभूताः । पूर्तयः ईप्सितार्थप्रदानानि । वि नवन्त वि[वि]धं स्तुवन्ति त्वां । हेतुकर्तृत्वेन । किमिति । क्षोणयो यथा । क्षोणिशब्दोऽत्र मनुष्यवचनः । ऋत्विग्यजमानादिमनुष्याः यथा त्वां स्तुवन्त्ये[वं] । एतदुक्तं भवति । त्वत्तो लब्धधनास्सन्तो वयं त्वया रक्ष्यमाणास्त्वां यज्ञेषु स्तुमः । तस्मादस्मभ्यं धनं देहि रक्षित (?) वाऽस्मानिति ॥

त्वं तान्वृत्रहत्ये चोदयो नॄन्कार्पाणे शूर वज्रिवः ।
गुहा यदी कवीनां विशां नक्षत्रशवसाम् ॥ १० ॥

हे इन्द्र त्वं तान् । [नॄन्] नरान् मरुदादिदेवान्मरुतो वा केवला[न्] । चोदयश्चोदयसि प्रेरयसि । किमर्थं । वृत्रहत्ये च ? वृत्रहननाय । असुराय शत्रुवधायेत्यर्थः । कीदृशे सङ्ग्रामे । असिः कृपाणः । तेन निर्वृत्तः सङ्ग्रामः कार्पाणः । तस्मिन् कार्पाणे सङ्ग्रामे । हे शूर वज्रिवः वज्रिन् ।

---

* निघण्टु २ । २० ॥

† पुरुत्राइति पदस्य पुकारादनन्तरं कोशे रिक्तपत्रं विद्यते । उत्तरपत्रारम्भे— "हरिः श्री गणपतये नमः अविघ्नमस्तु । अथ पञ्चे निवृत्ते"—इत्यत ऋ० १० । २२ । ६ ॥ आरभ्य सार्धत्रयाणां मन्त्राणां भाष्यं "पुरुत्रा" इति पदपर्यन्तं पुनर्लिखितम् । अस्माभिस्तु पुनर्लेखस्य साहाय्यमवलम्ब्य विशुद्धाः पाठाः मूले विनिवेशिताः । पुनर्लेखे मन्त्रप्रतीकानि वैशिष्ट्येन न प्रदर्शितानि ॥

कदा दयस उच्यते ।* गुहा गूढानि गुणैः संवृतानि स्तोत्राणि। यदि यदा शृणोपीति शेषः । कवीनां मेधाविनां । विशां सान्तर्प्यादि- मनुष्याणां ?। नक्षत्रशवसां गुणग्रहणद्वारेण देवान् प्रतिगन्तृस्तुतिबलानां स्वभूतानि स्तोत्राणि । नक्षत्रं नक्षतेर्गतिकर्मणः ।† शव इति बलनाम ॥‡

मक्षू ता त इन्द्र दानाप्नस आक्षाणे शूर वज्रिवः ।
यद्ध शुष्णस्य दंभयो जातं विश्वं सयावभिः ॥ ११ ॥

हे इन्द्र शूर वज्रिवः । आक्षाणे योद्धन् व्याप्नुवति तैर्व्याप्यमाने वा त्वयि असाधारणत्वेनावास्थितानि । मक्षु क्षिप्राणि अविलंबितानि क्षिप्रकरणे युक्तानीत्यर्थः । ता तानि । तानि सामर्थ्यात् कर्माणि । ते तव स्वभूतानि । कीदृशस्य । दानाप्नसः दानकर्मणः। स्तोतृभ्यो यष्टृभ्यश्च सततमभीप्सितार्थप्रदातुरित्यर्थः । कानि तानि । उच्यते । यत् ह । हेति पदपूरणः । यानि शुष्णस्यासुरस्य । जातमपत्यं । विश्वं सर्वं । दंभय हिंसितवानसि । क्षणेन सयावभिः सहयातृभिः सह[मरुद्भिः]। यान्येव- मादीनि तव कर्माणि तानि सर्वाण्येव क्षिप्रकरणे युक्तानीत्यर्थः ॥

माकुध्र्यगिन्द्र शूर वस्वीरस्मे भूवन्नभिष्टयः ।
वयंवयं त आसां सुम्ने स्याम वज्रिवः ॥ १२ ॥

हे इन्द्र शूर । अस्मे अस्माकं स्वभूताः । अभिष्टयः आभिमुख्ये- नेष्टयः इज्याः । अथवा ऽभिष्टयः अभीच्छा ईप्सितार्थप्रार्थनाः । वस्वीः महत्यः । अकुध्र्यक्§ सामर्थ्यात् कुत्सिताः। विफला इत्यर्थः । शीघ्रं वयं स्याम ।¶ मा भूवन । किं तर्हि । वयंवयं [द्विर्वच]नमिह त्व[र]ाप्रदर्श- नार्थं । ते तव प्रसादात् । आसां इज्यानां प्रार्थनानां वा जन्यत्वेन सम्बन्धिनि । सुम्ने सुखे ऽवस्थिताः शीघ्रं वयं स्याम। अभिष्टिजन्ये[न] दृष्टादृष्टसुखेन संयुताः** शीघ्रं वयं भवेमेत्याशास्महे इत्यर्थः । हे वज्रिवः॥

अस्मे ता त इन्द्र सन्तु सत्याहिंसन्तीरुपस्पृशः ।
विद्याम यासां भुजो धेनूनां न वज्रिवः ॥ १३ ॥

---

* दयस्युप्युते—कोनापाठः ।　　† निरुक्तं ३ । २० ॥　　‡ निघण्टुः २ । ९॥
§ अकुध्यक् इति—कोनापाठः ।　　¶ स्थानभ्रष्टमिव वाक्यमिदं भाति ।
** संयुक्ता—कोनापाठः ।

ता सत्या इत्युभयत्रापि प्रथमाबहुवचनस्य छान्दस आकारा-देशः। स्तुतिनिर्देशविशेषत्वात्।* अस्मे अस्माकं स्वभूतास्ताः। उपस्पृशः उपगम्य स्पृशन्ति गृह्णन्ति देवता गुणानिति उपस्पृशः स्तुतयः। ते तव प्रसादात्। हे इन्द्र सन्तु [भ]वन्तु सत्या। तव सद्गुणग्राहिण्य इत्यर्थः। अहिंसन्तीस्त्वामहिंसन्त्यश्च भवन्तु । [सत्स्तुति]त्वादनुक्षेत्रयन्त्यश्च भवन्त्वित्यर्थः। विद्याम लभिष्यामहे वयं। यासां स्तुतीनां जन्यत्वेन संबन्धिनः। भुजः भोगान् इष्टादष्टान्। किमिव । धेनूनां न । गवां संबन्धिनः क्षीरादिभोगान् कश्चित् गोपतिर्यथा लभते। एवं हे वज्रिवः॥

१४ अहस्ता यदपदी वर्धत क्षाः शचीभिर्वेद्यानाम् ।
शुष्णं परि प्रदक्षिणिद्विश्वायवे नि शिश्नथः ॥ १४ ॥

अहस्ता हस्तवर्जिता । अपदी पादवर्जिता । अपुरुषविधा-कर्मातमलक्षणेत्यर्थः। क्षाः पृथिवी। यत् यदा । वर्धत धनधान्यप्रजा-दिवृद्ध्या वृद्धा। शचीभिः कर्मभिर्वृष्ट्यादिभिः। वेद्यानां वेदितव्यानां मध्यमस्थानदेवतानां त्वत्प्रभृतीनां संबन्धिभिः तदा। शुष्णं शुष्ण-नामानमसुरं। परि प्रदक्षिणित् परिवेष्ट्य प्रदक्षिणं। विश्वायवे। तादर्थ्ये चतुर्थ्येया। सर्वत्राप्रतिहतगामिनः चक्रवर्तिनः उर्वशेयस्य राज्ञो ऽर्थाय। नि शिश्नथः। निगृह्य ताडितवानसि। त्वं हे इन्द्र॥

पिबापिबेदिन्द्र शूर सोमं मा रिषण्यो वसवान वसुः सन् ।
उत त्रायस्व गृणतो मघोनो महश्च रायो रेवतस्कृधी नः ॥१५॥

पिबापिब यागकालो ऽतिपातः। भयादपि त्वरितस्य द्विर्वचन-मेत [त्। इ]दिति पदपूरणः। हे इन्द्र त्वद्यागकालातिपातो यावन्न भवति तावच्छीघ्रं पिब सोममित्यर्थः। मा रिषण्यः याग[कालातिक्रम]जनित दोषेण मा हिंसीः अस्मान्। हे वसवान वसुना धनेन वसुभिर्वा देवै-स्तद्वन्। वसुः सन् प्रशस्तः सन् । प्रशस्तस्य वसन्तः कर्मवैगुण्य-करणेन हिंसितुमयुक्तमित्यर्थः। उत त्रायस्व। अपि च प्रमादजनित-कर्मवैगुण्यदोषात् पालयस्व। गृणत स्तुवतः । मघोनः हविर्धनेन धनवतः। कृधि कुरु। नः अस्मान्॥

---

*अस्माकमित्यारभ्य स्तुतय इत्यन्तः पाठः सायणीये भाष्ये मद्राभ्रष्टः पाठो विद्यते॥

[ त्रयोविंशं सूक्तम् ]

यजामह इत्यैन्द्रं सप्तर्चं विमद एव ददर्श ॥

यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्य? विव्रतानाम् ।
प्र श्मश्रु दोधुवदूर्ध्वथा भूद्वि सेनाभिर्दयमानो वि राधसा ॥१॥

यजामहे वयमिन्द्रं । कीदृशं । वज्रदक्षिणं सततं शत्रुवधाय वज्रो दक्षिणे हस्ते यस्य तं । वज्रेणोत्साहिनं वा । [ हरीणां ] हरिसंज्ञानां । कीदृशानां । विव्रतानां रथ[व]हनमेघहननादिविविधकर्मणां स्वामिनमिति शेषः । रथ्यं रथस्य च नेतारमित्यर्थः । अथवा हरीणां विव्रतानां । रथ्यं ईहयितारं । यत्रेष्टं तत्र गमयितारमित्यर्थः । य इन्द्र श्मश्रुष्ठ? प्र दोधुवत् प्रकंपयत्यक्रयत्यन्ताभिरुच्या? सोमं पिवन् प्रचालयतीत्यर्थः । य इन्द्र ऊर्ध्वथा भूत् । ऊर्ध्वथेति । थाऽत्र प्रकारवचनाभावात् स्वार्थ उपमार्थे वा । तं प्रत्नथेति यथा ।* तं प्रत्यवेक्षणार्थं ऊर्ध्वश्च भवति । अथवा यथा राजा कश्चिद्युद्धकाले योद्धृप्रत्यवेक्षणार्थमूर्ध्वो भवति । कदा । सेनाभिर्मरुदादिस्वसेनाभिः शत्रून् । वि दयमनो विविधं हिंसन् । विर[ा]धसा व्युपसर्गः श्रुतिसामर्थ्याद्दयमान इति क्रियापदमनुवर्त्यं । राधसेति द्वितीयार्थे तृतीया । राधः धनं च । स्तोतृभ्यो यष्टृभ्यश्च वि दयमानो विविधं ददत् । आदरेणोर्ध्वो भवति य इन्द्रः तं यजामह इति संबन्धः कार्यः ॥

हरी न्वस्य या वने विदे वस्विन्द्रो मघैर्मघवा वृत्रहा भुवत् ।
ऋभुर्वाज ऋभुक्षाः पत्यते शवोऽव क्ष्णौमि दासस्य नाम चित् ॥२॥

अस्येन्द्रस्य । तौ यौ । हरी अश्वौ । नु क्षिप्रं । विदे विन्देते लभेते । वसु धनमृजीपलक्षणं । क लभेते । वने । वन्यते संभाज्यते उपजीव्यते सर्वेणेति वनं यज्ञः । अटवी वा । तत्र यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ताभ्यां तादृशाभ्यां हरिभ्यां वृत्रहननसाधनभूताभ्यां । इन्द्रः मघैर्धनैः । मघवा धनवान् । वृत्रहा वृत्रस्यासुरस्य मेघस्य वा हन्ता । भुवत् भवति । सभा? किंच । भुवः ऋभुः उरु भातीन्द्रः उरु-

* ऋ० ५।४४।१॥ निरुक्त ३।१६॥ प्रत्नथेति—सांमपाठ ।

भवति वा । रूपं रूपं प्रतिरूपो बभूव—इति वचनात् ।* इदं व्याख्यानं ऋतेन वोदकेन भवति । विद्युरूपः† ऋतेन सह भवति वा । वाजश्च इन्द्रः । कथं । वाजेनान्नेन बलेन वा तद्वान् । वाजशब्दश्चान्तर्णीतमत्वर्थः । अथवा-ऋभुमन्तं वाजवन्तम्‡—इति वचनादृभुमान् वाजवांश्चेत्यर्थः । ऋभुर्वाज इति सौधन्वानामुच्यते । ऋभुक्षाः महत्तश्चेन्द्रः ! अथवा उरुक्षयणः । उरावन्तरिक्षे क्षयति निवसतीति । किंच । पत्यते शवः ईशे चेन्द्रो महतो बलस्य । शत्रोर्नामापि नमत्यनेनेति नामशिरः तदपि । किमुदात अन्यदंगं । अथवा नामापि निर्णाशयामीति किमुत शत्रुं । अथवाऽव क्ष्णोमीत्यत्र पुरुषव्यत्ययः कार्यः । य ईदृश इन्द्रः । स अवक्ष्णोति दासस्य नामापीति पूर्वयोज्यम् ॥

यदा वज्रं हिरण्यमिदथा रथं हरी यमस्य वहतो वि सूरिभिः ।
आ तिष्ठति मघवा सनश्रुत इन्द्रो वाजस्य दीर्घश्रवसस्पतिः ॥३॥

यदा यस्मिन् काले । वज्रं हिरण्यं हिरण्मयं हिरण्यमण्डितं वेत्यर्थः । शत्रुप्राणानां हर्तारं वा । शत्रुवधाय गृह्णातीति शेषः । इदिति पदपूरणः । अथ तदा । रथं । कीदृशं । हरी अश्वौ । यं रथं । अस्येन्द्रस्य स्वभूतं । वि वहतः यत्रेष्टुं गन्तुं तत्र विशेषेण प्रापयतः । तं रथं सूरिभिः स्तोतृभिः कुत्सादिभिः सह । आ तिष्ठति आरोहति । मघवान् धनवान् । सनश्रुतश्चिरप्रख्यातः । निसर्गत एव जगति विदित इत्यर्थः । इन्द्रः वाजस्यान्नस्य बलस्य । सौधन्वस्य वा । दीर्घश्रवसो महाकीर्तेः । पतिः पा स्वामी वा ॥

सो चिन्नु वृष्टिर्यूथ्या३स्वा सचाँ इन्द्रः श्मश्रूणि हरिताभि प्रुष्णुते ।
अव वेति सुक्षयं सुते मधूदिद्धूनोति वातो यथा वनम् ॥४॥

सो शब्दस्साशब्दपर्यायः । चिदित्युपमार्थे । नु इति क्षिप्रार्थे । तच्छब्दश्रुतेर्योग्यार्थयुक्तो यच्छब्दोऽध्याहार्यः । या मह्या§ वृष्टिः स यथा क्षिप्रं सर्वं युगपत्सिञ्चत्येवं । यूथ्या यूथानि वृन्दानि मरुदादिदेवगणलक्षणानि । स्वा स्वानि । सचा सह । इन्द्रः श्मश्रूणि च स्वानि ।

* ऋ० ६ । ४७ । १८ ॥ † ऋ० २ । ५२ । ६ ॥
‡ निरुक्तेन ११ । १६ ॥ सह तुल्यताम् । § माहा—कोशपाठः ।

हरिता हरितवर्णेन सोमेनाभि प्रष्णुते। आभिमुख्येन स्थित्वा क्षिप्रं सिञ्चति सोमं पाययति। पिबति चेत्यर्थः। किञ्च। अव वेति अभि गच्छति। सुक्षयं शोभनं यज्ञगृहं। गत्वा च। सुते अभिषुते सति सोमे। मधु सोमलक्षणं पीत्वा मत्तस्सन्निति शेषः। उदित् उद्धूनोति उत्कंपयति। किं। सामर्थ्याच्छरीरं। किमिव। वातो यथा वनं वृक्षसंघातम्॥

यो वाचा विवाचो मृध्रवाचः पुरू सहस्राशिवा जघान।
तत्तदिदस्य पौंस्यं गृणीमसि पितेव यस्तविषीं वावृधे शवः॥५॥

यः इन्द्रः। वाचा वाङ्मात्रेण। हुंकारमात्रेणेत्यर्थः। विवाचः प्रनष्टवाचः कृत्वेति शेषः। मृध्रवाचो मृदुवाचश्च शत्रून् कृत्वेति शेषः। पुरु बहूनि। सहस्रा सहस्राणि। अशिवा असुखानि। सर्वस्यासुखकारिणीत्यर्थः। जघान हन्ति। यश्चेन्द्रः पितेव। उत्तरः पादः पूर्वं व्याख्यायते। यथा पिता पुत्रस्य तविषीं बलं वर्धयति अन्नपानप्रदानेन। एवं वृष्टिप्रदानद्वारेण सर्वस्य जगतश्शवो बलं। वावृधे वर्द्धयति। तस्यास्येन्द्रस्य स्वभूतं तत्तत् पौंस्यं बलं। येन येन बलेन शत्रून् हन्ति। तत्तत् बलमित्यर्थः। गृणीमसि स्तुमो वयं॥

स्तोमं त इन्द्र विमदा अजीजनन्नपूर्व्यं पुरुतमं सुदानवे।
विद्मा ह्यस्य भोजनमिनस्य यदा पशुं न गोपाः करामहे॥६॥

स्तोमं स्तुतिविशेषं। कीदृशं। अपूर्व्यं अपूर्व्यमन्यैरकृतपूर्वमुत्कृष्टमित्यर्थः। पुरुतमं बहुतमं। अतिशयेन बहुप्रकारयुक्तमित्यर्थः। हे इन्द्र ते तुभ्यं। सुदानवे शोभनदानार्थाय। विमदा अजीजनत्। पूर्वोत्तरयाप्ययोरेकवाक्यतायै पुरुषव्यत्ययोऽत्र कर्तव्यः। विमद[ना]मानो वयं जनितवन्तः। कृतवन्तः इत्यर्थः। तस्मात् कृतवन्तं हिमः? इन्द्रधनं? प्रापयकर्मं? इत्यर्थः।* कथं कुर्मः। पशुं न गोपाः। यथा पशुं सामर्थ्याद्गोधेनुं। गोपाः गोपालः। दोहार्थमाह्वयन्नभिमुखं करोत्ययं॥

माकिर्न एना सख्या वि यौषुस्तव चेन्द्र विमदस्य च ऋषेः।
विद्मा हि ते प्रमतिं देव जामिवदस्मे ते सन्तु सख्या शिवानि॥७॥

* अत्र किञ्चिदार्थ्यं त्रुटिं भाति।

माकिः कोचिदीर्ष्यालवः। नः अस्माकं। द्वयोश्च* इत्यत्र द्वयोर्बहुवचनं। हे इन्द्र तव मम च। विमदस्य ऋषेः। आवयोः एता एतानि ।† [सख्या] सख्यानि स्तुत्यस्तोतृत्वेज्यत्वयष्टृत्वलक्षणानि । धि योषुर्विमिश्रयेयुर्वियोजयेयुः। तव च मम च भद्रं कुर्वन्तस्सन्तो धनदानव्याघातकारणद्वारेण माऽपनयन्त्वित्यर्थः । यस्माद्विजानीमो वयं । ते तव। प्रमतिं प्रकृष्टां मतिमनुग्राहिकां बुद्धिं । किमिव । जामिवत् । जाम्यतिरेकनाम बालिशस्य वा । समानजातीयस्य वा ।‡ इति वचनादत्र जामिशब्देन समानजातीय उच्यते । यथा समानादेकस्माज्जातस्य भ्रातुर्भगिन्यामिव प्रकृष्टां बुद्धिं स्नेहयुक्तां जनयति कश्चिदेवं। कस्मा[त्]। [यस्मा]द्धे देव। अस्मै अस्माकं च। ते तव। मम च। सन्तु भवन्तु । सख्यानि शिवानि सुखानि। अनपायानीत्यर्थः ॥

[ चतुर्विंशं सूक्तम् ]

उत्तराणि च त्रीणि विमद एव ददर्श । अस्याद्यस्तृच ऐन्द्र उत्तर आश्विन. ॥

इन्द्र सोममिमं पिब मधुमन्तं चमू सुतम् ।
अस्मे रयिं नि धारय वि वो मदे सहस्रिणं पुरूवसो विवक्षसे ॥१॥

हे इन्द्र सोममिममस्मत्प्रदत्तं। पिब। मधुमन्तं मधुस्वादूपेतं। चमू। सप्तमीद्विवचनस्य लुगत्र द्रष्टव्यः। चम्वोश्च मनसाधनयोरधिषवणफलकयोरित्यर्थः । सुतमभिषुतं । पीत्वा च सोमम् । अस्मे अस्मासु । रयिं धनविशेषं । कीदृशं । सहस्रिणं सहस्रसंख्यायुक्तं। प्रभूतमित्यर्थः। नि धारय नियमेन स्थापय। किंनिमित्तं । वः युष्माकं, सर्वेषामेव देवानां। वि विविधे सोमजन्यमदे निमित्ते। त्वद्दत्तेन धनेन यस्माद्वयं युष्मदर्थं सोमयागं पुनरपि कुर्मः । तस्मादस्मभ्यमनन्तं धनं देहीत्यर्थः। हे पुरूवसो बहुधन । कस्मादेवमुच्यसे । यस्मान्महान्भवसि त्वं। यन्महान्भवासि त्वम् ॥§

---

* पाणि० १।२।५९॥ † ऋग्वेदे—एना—पाठो विद्यते।

‡ निरुक्त ४।२०॥ निरुक्तवृत्तिट्टदुर्गमतानुसारेण—असमानजातीयस्य—इति युक्तः पाठः॥ § पुनः पठितमशुद्धं च॥

त्वां यज्ञेभिरुक्थैरुप हव्येभिरीमहे ।
शचीपते शचीनां वि वो मदे श्रेष्ठं नो धेहि वार्यं विवक्षसे ॥२॥

त्वामिन्द्रं । यज्ञेभिः सोमयागैः । उक्थैः शस्त्रादिस्तुतिभिश्चेत्यर्थः । हव्येभिर्हविर्भिश्चेत्यर्थः ।* उप ईमहे । तृतीयाश्रुतेरुपोपसर्गश्रुतेश्च उपाराध्य धनं याचामहे इत्यर्थः । याचितश्च सन् त्वं । हे शचीपते । शचीनां यागकर्मणां वाचां वा स्तुतिलक्षणानां । विफलत्वेन सम्बन्धिनं । श्रेष्ठमतिशयेन प्रशस्तं गोहिरण्यादिकं द्रष्टं । वार्यं वरणीयं स्वर्गापवर्गादिकमदृष्टञ्च । नः अस्मभ्यं । धेहि देहि । कदा ददासि† । उच्यते । युष्माकं सर्वेषामेव देवानां विविधे विशिष्टे वा सोमजन्यमदे सति । कस्मादेवमुच्यसे । यस्मान्महान्भवसि त्वम् ॥

यस्पतिर्वार्याणामसि रध्रस्य चोदिता ।
इन्द्र स्तोतॄणामविता वि वो मदे द्विषो नः पाह्यंहसो विवक्षसे ॥३॥

हे इन्द्र यस्त्वं पति स्वामी । वार्याणां वरणीयानां धनानाम् । असि भवसि । रध्रस्य‡ संसिद्धस्य सम्यक्कारिणो यजमानस्य । कर्मसु चोदिता चोदयिता । धनदानेन नियोक्ता भवसि । स्तोतॄणां चाविता सर्वतो रक्षिता भवसि । स त्वं । वि वो मदे युष्माकं सर्वेषामेव देवानां विविधे विशिष्टे वा सोमजन्यमदे सति । द्विषो द्वेष्टुस्सकाशात् । नः अस्मान् । पाहि रक्ष । अंहसः पापाच्च पाहि । कस्मादेवमुच्यसे । यस्माद्विवक्षसे महान् भवसि त्वं ॥

युवं शक्रा मायाविना समीची निरमंथतम् ।
विमदेन यदीळिता नासत्या निरमंथतम् ॥४॥

युवां । हे शक्रा शक्तौ । समर्थौ शत्रुवधादिकर्मकर्णाय । मायाविना प्रज्ञावन्तौ च । शत्रुवञ्चनकुशलौ वा । समीची संगते परस्परेण संयुक्ते अरणी । निरमन्थतं निर्मथितवन्तौ । अश्विनावध्वर्यू§ इति ब्राह्मणेनोक्तत्वात् । कदा निर्मथितवन्तौ युवामुच्यते । विमदेन मया ।

* ०हविर्भिश्चेत्य०—कोशपाठः । † ददासि—कोशपाठः ।
‡ रध्रस्य—कर्मेरपाठः । § ऐ० ब्रा० १ । १८ ॥

यत् यदा । ईळितौ स्तुतौ । नासत्या नासत्यनामानौ युवां । निरमन्थतं निर्मथितवन्तौ स्थो युवां ॥

विश्वे देवा अकृपन्त समीच्योर्निष्पतन्त्योः ।
नासत्यावब्रुवन्देवाः पुनरा वहतादिति ॥५॥

विश्वे देवाः सर्वे देवा इन्द्रादयः । अकृपन्त युवामश्विनौ स्तुवन्तः । कदा उच्यते । समीच्योर्निष्पतन्त्योः । यस्य च भावेन भावलक्षणम् ।* इत्येषा सप्तमी । संगतयोः अग्निं निर्मन्थनकाले परस्परेण संयुक्तयोररण्योः । अग्निचूर्णरूपेण नीचैस्तीर्थैर्गनपतन्त्योः । अरण्योः निष्पतनक्रियया स्तुतिक्रिया लक्ष्यते । यदा युवामरणिभ्यामग्निं निर्मथितवन्तौ तदा विश्वे देवा युवां स्तुतवन्त इत्यर्थः । किञ्च । नासत्यौ युवामब्रवन्नुक्तवन्तौ देवाः । किमिति । पुनरा वहतादिति । पुनः पुनरीदृशानि कर्माणि जगत्स्थितिहेतुभूतकर्माणि आभिमुख्येन स्थित्वा† वहतमन्नं प्रापयतं निर्वर्तयतं कुरुतमित्यर्थः ॥

मधुमन्मे परायणं मधुमत्पुनरायनम् ।
ता नो देवा देवतया युवं मधुमतस्कृतम् ॥६॥

मधुमत् मध्वित्यत्र रसविशेष उच्यते । तेन चात्र तद्वता प्रीतिर्लक्ष्यते । युवयोः प्रसादान्मधुमदस्त्विति शेष । प्रीतियुक्तमस्त्वित्यर्थः । मे मम । परायनं परागमनं । योगक्षेमार्थं गृहाद् बहिर्गमनमित्यर्थः । मधुमत् प्रीतियुक्तमेवास्तु । पुनरायनं गृहान् प्रति आगमनम् । अपि किञ्चि ता । तौ यौ युवां सदा भक्तानां अनुग्रहीतारौ । युवं युवां । हे देवा देवौ । न अस्मान् । मधुमतः सदा प्रीतियुक्[ान् ] । कृतं कुरुतं । तेन देवतया देवत्वेनाणिमादिदैवतैश्वर्ययोगादित्यर्थः ॥

[ पञ्चविंशं सूक्तम् ]

उत्तरं सौम्यमेकादशर्चं ।

भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अधा ते सख्ये अन्धसो वि वो मदे रणन्गावो न यवसे विवक्षसे ॥१॥

* पाणि० २ । ३ । ३७ ॥
† मोक्षमूलर सम्पादिते सायणभाष्ये —स्थित्वावहतं—इति पाठः ।

हे सोम । भद्रं कल्याणं । शुभसंकल्पलक्षणं । नः अस्माक सम्बन्धिनः । वातय गमनाय प्रापय । शुभसंकल्पमस्माकं मनः कुर्वि-त्यर्थः । अपि दक्षं । दक्ष वृद्धौ । अस्माकं दक्ष वृद्धं सर्वव्यापिनमन्तरात्मान-मपि । भद्रं शुभकारित्वलक्षणं कुर्वित्यर्थः । उत क्रतुं अस्माकं बुद्धिमपि भद्रं शुभाध्यवसायलक्षणं प्रापय । शुभाध्यवसायिनं कुर्वित्यर्थः । एत-स्मिन् यथोक्ते सर्वस्मिन् कृते सति । अध अथ । ते तव सोमस्य सम्बन्धिनि । स[ख्ये] सखिकर्मणि स्तुत्यस्तोतृत्वेज्यत्वयष्टृत्वलक्षणे । रणन् रमामहे । प्रीतिं कुर्म इत्यर्थः । किमिव । गावो न यवसे । यथा गावः यवसे घासे रमन्ते प्रीतिं कुर्वन्त्येवं । किमर्थं त्वद्यागलक्षणे सख्ये । अन्धसोऽप वि वो मदे सोमाख्यस्यान्नस्य जन्यत्वेन सम्बन्धिनि युष्माकं सर्वेषामेव देवानां विविधे मदे निमित्ते । कस्मादेवमुच्यसे । यस्माद्विवक्षसे महान्भवसि । महान्तश्चाभ्यर्थितास्शूरा भवन्ति ॥

हृदिस्पृशस्त आसते विश्वेषु सोम धामसु ।
अधा कामा इमे मम वि वो मदे वि तिष्ठन्ते वसूयवो विवक्षसे ॥२॥

हे सोम । ते तव । हृदिस्पृशः हृदयस्य बुद्धेः स्तुतिभिः स्प्रष्टारः सन्तः । आसते तिष्ठन्ति ऋत्विजः । विश्वेषु सर्वेषु । धामसु स्वेषु स्थानेषु स्तुवन्तस्तिष्ठन्तीत्यर्थः । तेषु स्वस्थानेषु स्थित्वा त्वां स्तुवन् । अध अथ । कामाः अभिलाषाः । इमे मम हृदयादिति शेषः । वि तिष्ठन्ते उत्तिष्ठन्ति । किं विशिष्टाः । वसूयवो च सुकामाः धनमिच्छन्तः । किमर्थं । युष्माकं सर्वेषामेव देवानां सोमजन्यविविधमदे निमित्ते । सोमयागार्थमित्यर्थः । कस्मादेवंपरया ? देवयागार्थं धनं प्रार्थ्यते । यस्माद्विवक्षसे महान् त्वं भवसि । महान्तश्च परिगतश्च भवन्ति । अभ्यर्थिताः शूराश्च ॥

उत व्रतानि सोम ते प्राहं मिनामि पाक्या ।
अधा पितेव सूनवे वि वो मदे मृळा नो अभि चिद्वधाद्विवक्षसे ॥३॥

उतापि । व्रतानि यागकर्माणि । हे सोम । ते त्वदर्पमर्द । प्र मिनामि प्रहिनस्मि प्रकर्षेण [करो]मि । सदा पाक्या परिपक्वया नर्यार्थ-दर्शिन्या प्रज्ञया । अथवा व्रतविशेषणमेतत् । पाक्यानि परिनिष्ठितानि

त्वमपि । अथाथ त्वद्यागकरणानन्तरं परिकृष्टस्सन् । मृळा नः । सुखाय भव । नः अस्माकं । अभि विद्द्धात् आभिमुख्येन स्थित्वा शत्र्वादि-र्घाधाश्च पालयास्मानिति शेषः । किमिव । पितेव सूनवे । यथा पिता पुत्रस्यार्थाय तैस्तैरुपायैः सुखो भवति पालयति च सर्वस्मात् पुत्रं एवं । किमर्थं सुखयानि पाळयामि च त्वां । उच्यते । युष्माकं सर्वेषामेव देवानां विविधे सोमजन्यमदे पुनः पुनः कर्तव्यत्वेन निमित्तभूते यस्मात्त्वया सुसुख्यमान स्सुपाद्यमानश्च पुनः पुनः सोम-यागं युष्मदर्थं करोमीति । तस्मात् कारणान्मां सुखय सर्वतः पाळय चेत्यर्थः । कस्मादेवमुच्यसे । यस्मान्महान्मघासि त्वं । महान्तश्च भवान् सुखयन्ति पाळयन्ति [च] ॥

समु प्रयन्ति धीतयः सर्गासोऽवताँ इव ।
क्रतुं नः सोम जीवसे वि वो मदे धारया चमसाँ इव विवक्षसे ॥४॥

समु प्र । उकारः पदपूरणः । सं प्र यन्ति संभूय प्रकृष्टया गत्या गच्छन्ति त्वां प्रति । धीतयः अस्मदीया स्तुतयः । देवतागुणान्धारयन्ति गृह्णन्तीति । धीतय स्तुतयः । किमिव सं प्र यन्ति । सर्गासो ऽवत इव ।* विसृज्यन्ते उदकपानार्थमादानार्थं चेति सर्गाः । गोसंघा घटिकासंघा वा । अवत इति कूपनाम । † यथा सर्गा गोसंघा घटिकासंघा वा उदकपा-नार्थमादानार्थं वाऽवतान् कूपान् प्रति संभूय प्रकृष्टया गत्या गच्छन्ति एवं एतज्ज्ञात्वा । क्रतुं यागकर्म प्रतिज्ञां वा कर्तारं वा कर्मणामन्तर-पुरुषः । नः अस्माकं । जीवसे चिरंजीवनाय । हे सोम । धारय महता-दरेण स्थापय मयि । किमिव । वि वो मदे चमसानिव । यथा युष्माकं सर्वेषामेव देवानां विविधसोमजन्यमदे कर्तव्यत्वेन निमित्तभूते चमसा-नध्वर्युर्हविर्धाने महता यत्नेन धारयत्येवं । कस्मादेवमुच्यसे । यस्मात् महान् भवसि त्वं ॥

तव त्ये सोम शक्तिभिर्निकामासो व्यृण्विरे ।
गृत्सस्य धीरास्तवसो वि वो मदे व्रजं गोमन्तमश्विनं विवक्षसे ॥५

हे सोम । तव गृत्सस्य‡ मेधाविनः । तवसः महतोऽर्थाय ये मम यजमानस्य स्वभूता ऋत्विजः । निकामासो दृष्टादृष्टफले नियतकामाः ।

* सर्गासो वसत इव—कोशपाठः । † निघण्टु ३ । २३ ॥ ‡ हृत्सस्य—कोशपाठः ॥

धी॥ मेधाविनः [स]म्यक्कारिण इत्यर्थः । इत्यते शाकिभि र्योगकर्मभिस्सह व्युण्विरे विविधा स्तुतीर्गमयन्ति प्रेरयन्ति कुर्वन्तीत्यर्थः । एतज्ज्ञात्वा व्रजं । व्रजन्त्यत्रेति व्रजं गोष्ठमन्दिरा? चात्र सामर्थ्यादुच्यते । तं गोमन्तं गोसहितं । अश्विनमश्वसहितं चास्मभ्यं देहीति शेषः । किमर्थं । युष्माकं सर्वेषामेव देवानां विविधे सोमजन्यमदे पुनः [पुनः] कर्तव्यत्वेन निमित्तभूते । कस्मादेवमुच्यसे । यस्मान्महान्भवसि त्वं ॥

पशुं नः सोम रक्षसि पुरुत्रा विष्ठितं जगत् ।
समाकृणोषि जीवसे वि वो मदे विश्वा संपश्यन्भुवना विवक्षसे ॥६

हे सोम । पशुं देवयागार्थमुपाकृतं नः अस्माकं स्वभूतं । रक्षसि सर्वतः पाळयसि त्वं । न केवलं पशुं किं तर्हि । पुरुत्रा बहुधा सुरनरतिर्यग्योन्यादिभावेन । विष्ठितमवस्थितं । जगच्च पाळयसि सर्वतः । किञ्च समाकृणोषि समाकरोषि । जगतो वृत्तिञ्च विदधासीत्यर्थः । किमर्थं । जीवसे जीवनाय । कथं वृत्तिं विदधासि । उच्यते । विश्वा संपश्यन् भुवना । सर्वाणि भूतानि सम्यं पश्यन् यथार्हं विदधासीत्यर्थः । किमर्थमेतत् सर्वं यथोक्तं करोषि । उच्यते । वि वो मदे । युष्माकं सर्वेषामेव देवानां विविधहविर्जन्यतृप्त्यर्थं । उक्तञ्च—इतः प्रदानमुत देवा उप जीवन्ति अमुतः प्रदानं मनुष्या इति ।* विवक्षसे महान् भवसि त्वं । उचितञ्च महतामेतत् यथोक्तं ॥

त्वं नः सोम विश्वतो गोपा अदाभ्यो भव ।
सेध राजन्नप स्रिधो वि वो मदे मा नो दुःशंस ईशता विवक्षसे ॥७॥

हे सोम । यस्त्वमदाभ्य ।† केनचिदप्यहिंस्यः । स त्वं । नः अस्माकं । विश्वतः सर्वतः । गोपाः रक्षिता भव । किञ्च । हे राजन् सर्वस्य स्वामिन् अप सेधापगमयास्मत्तः अपजहि वा । स्रिधः स्रेधितॄन् अस्माकमपक्षपयितॄन् हन्तॄन्वा । मा च । नः अस्माकं । दुदशंसः दुश्चरितानां विद्यमानानामविद्यमानानाञ्च शंसिता प्रख्यापयिता । ईशत ईशिता भूत । तव प्रसादादस्माकमपयक्ता मा भूत् कश्चिदित्यर्थः । किमर्थमेतत्सर्वं प्रार्थ्यसे । वि वो मदे । युष्माकं सर्वेषामेव देवानां विविधसोमजन्य-

* तै० सं० ३ । २ । ९ । ७ ॥   † अदाभ्य—कोदयाट ॥

तृप्त्यर्थं । महांश्च [भ]वसि त्वं । महत्वाच्च सर्वमर्थ्यसे विविधैर्हविर्भि-स्तर्प्यसे चेत्यर्थः ॥

त्वं नः सोम सुक्रतुर्वयोधेयाय जागृहि ।
क्षेत्रवित्तरो मनुषो वि वो मदे द्रुहो नः पाह्यंहसो विवक्षसे ॥८॥

हे सोम यस्त्वं । सुक्रतुः स्वप्रज्ञतस्सुकर्मा वा । क्षेत्रवित्तरः । क्षि निवासगत्योरित्यस्य क्षेत्रं । क्षेत्रस्य स्थित्युत्पत्तिप्रलयकालेषु जगतो निवासभूतस्य वा कारणात्मनो ऽतिशयेन वेत्ता च । स त्वन्नः अस्मभ्यं । वयोधेयायान्नधेयाय । जागृहि यतस्वेत्यर्थः । किञ्च । मनुषो मनुष्यात् । कीदृशात् । द्रुहः दोग्धु स्सकाशात् । नः अस्मान् । पाहि रक्ष । अंहसः पापाच्च रक्ष । म* किमर्थमेवं प्रार्थ्यसे । युष्माकं सर्वेषामेव देवानां विविधसोमादिहविर्जन्यतृप्त्यर्थमित्यर्थः । महांश्च भवसि ॥

त्वं नो वृत्रहन्तमेन्द्रस्येन्दो शिवः सखा ।
यत्सीं हवन्ते समिथे वि वो मदे युध्यमानास्तोकसातौ विवक्षसे ॥९॥

हे इन्दो सोम । वृत्रस्य शत्रोरतिशयेन हन्तः । यस्त्वमिन्द्रस्य । शिवः सुखकरः । सखा । स त्वञ्च अस्माकं । रक्षिता भवेति शेषः । कदा । यत् यदा । सीं सर्वतः । हवन्ते आह्वयन्ति युद्धार्थमस्मान् दानवः । युध्यमाना स्संप्रहरन्तः सन्तः । क्व । समिथे संग्रामे । कीदृशे । तोक-सातौ । तोकमित्यपत्यनाम ।† षणु दाने इत्यस्योत्तरमपत्यमपि दीयते यत्र हितैरित्यर्थः तत्र । महतीत्यर्थः । [त]दा रक्षिता भव । कस्मिन्नि-मित्ते । युष्माकं सर्वेषामेव देवानां विविधहविर्जन्यलक्षणे निमित्त । रक्षितास्सतो ? यस्माद्युष्माकं यागं करिष्यामः । तस्मात् कारणात् अस्मान् रक्षेत्यर्थः । महांश्च भवसि त्वं । महतां युक्तं रक्षणं कर्तुं भक्तानां ॥

अयं घ स तुरो मद इन्द्रस्य वर्धत प्रियः ।
अयं कक्षीवतो महो वि वो मदे मतिं विप्रस्य वर्धयद्विवक्षसे ॥१०

अत्र तच्छब्दश्रुतेरेकवाक्यताय यच्छब्दो ऽध्याहार्यः । यः सोम इन्द्रस्यार्थाय । वर्धत भूजपर्वतादिप्रदेशवृद्धः । प्रियश्चन्द्रस्य । अयं घ सः अयमेव सतः अयमेव स सोमो ऽस्माभिरभिषुत इन्द्रस्यार्थाय ।

* अनर्थक भाति । † निघण्टु २ । २ ॥

कीदृशः । तुरः सर्वकार्येषु त्वरणशीलः । क्षिप्रकारीत्यर्थः । मदो मदकरश्चायं सोमः । कक्षीवत ऋषेः । कीदृशस्य । महो महतः । विप्रस्य मेधाविनः । मतिं प्रज्ञां । वर्धयत् वर्धितवान् । कस्मिन् सति । युष्माकं सर्वेषामेव देवानां विशिष्टे सोमजन्यमदे सति । य एवमतः अस्माकमपि मतिं वर्धयत्विति शेषः । उत्तरं प्रत्यक्षकृतत्वात भिन्नं वाक्यं । सोम विवक्षसे महान् भवसि त्वं ॥

अयं विप्राय दाशुषे वाजाँ इयर्ति गोमतः ।
अयं सप्तभ्य आ वरं वि वो मदे प्रान्धं श्रोणं च तारिषद्विवक्षसे ॥११

अयं सोमः । विप्राय मेधाविने । दाशुषे हवींषि दत्तवते यजमानाय । वाजान् गोमतः । अन्नानि गोसहितानि । इयर्ति गमयति ददातीत्यर्थः । किञ्चायमेव सोमः । सप्त ऋत्विग्भ्यः । आ वरमाडुपसर्गश्रुतेर्हरतीति क्रियापदमध्याहार्यं । आहरति । वरं यजमानस्यार्थाय र हरण ? दानस्य च तत् भावे भावात् । किञ्च । युष्माकं सर्वेषामेव यानां विशिष्टसोमजन्यमदे सति प्रीतस्सन् । अन्धं चक्षुर्विकलमृषिं ोषितामसमन्यं वा । श्रोणञ्च बधिरञ्चेत्यर्थः । प्र तारिषत् सर्वप्रकारया ्या प्रकर्षेण वर्द्धितवानित्यर्थः । प्रत्यक्षकृतत्वादेव पूर्ववदुत्तरं भिन्नं वाक्यं । हे सोम महान् भवसि सर्वतस्त्वं तदधीनजगत्स्येत ? ॥

[ षड्विंशं सूक्तम् ]

उत्तरं सूक्तं नवर्चमैन्द्रं पौष्णं । वासुको वसुक्रदद्दर्शे ॥

प्र ह्यच्छा मनीषाः स्पार्हा यन्ति नियुतः ।
प्र दस्रा नियुद्रथः पूषा अविष्टु माहिनः ॥ १ ॥

हि यस्मात् । प्र यन्ति गच्छन्ति । किमर्थं । अच्छ गुणग्रहणप्रकारेण पूषणमाप्तुं । मनीषाः वाचस्स्तुतिलक्षणाः । कीदृश्यः । स्पार्हाः सर्वगुणोपेतत्वात् स्पृहणीयाः । नियुतः नियमनाद्वा नियोजनाद्वा ।* अस्माभिर्नियताः नियुक्ता वा । उच्चारिता इत्यर्थः । एतज्ज्ञात्वोपकारं मत्युपकारार्थं । दस्रा दर्शनीयं मम ......†

* निरु० ५ । २८ ॥  † अस्य मन्त्रस्यावशिष्टं भाष्यं क्वापि नास्ति । इत्याकारस्य मन्त्रस्यापि हस्तलेखेन न निर्णीतम् ।

यस्य त्यन्महित्वं वाताप्यमयं जनः ।
विप्र आ वंसद्धीतिभिश्चिकेत सुष्टुतीनाम् ॥ २ ॥

वाताप्यमुदकमण्डले वृष्ट्यर्थं संहृतं परिपक्वं अयं यजमानजनः। कीदृशः। विप्रो मेधावी। आ वंसन्मर्यादया संभजते उपजीवति। यस्य च पूष्णोऽर्थाय। धीतिभि यागकर्मभिस्सह। चिकेत जानाति। सुष्टुतीनां करणमिति शेष.। यागकर्माणि स्तुतीश्च सम्यक्करोतीत्यर्थ.॥

स वेद सुष्टुतीनामिन्दुर्न पूषा वृषा ।
अभि प्सुरः प्रुषायति व्रजं न आ प्रुषायति ॥ ३ ॥

स उक्त गुणः। पूषा। वेद जानाति। सुष्टुतीनां शोभनस्तुतीनां स्वरूपमिति शेषः। किञ्च। इन्दुर्न चन्द्र इव। पूषा वृषा वर्षिता। प्सुरः वृष्टिरूपम्। अभि प्रुषायति मर्यादया सिञ्चति। अभिरक्षति। वर्षतीत्यर्थः। कथमुच्यते। व्रजं मेघं। नः अस्मदर्थम्। आ प्रुषायति मर्यादया वृष्ट्युदकं सेचयति। विद्युद्रूपेण स्थित्वाथवा व्रजं सामर्थ्यात् गोसहितं गोष्ठं वा प्रुषायति मर्यादया सिञ्चति। ददातीत्यर्थः॥

मंसीमहि त्वा वयमस्माकं देव पूषन् ।
मतीनां च साधनं विप्राणां चाधवम् ॥ ४ ॥

मंसीमहि। मन्यतिरर्चतिकर्मा। * अत्र स्तुत्यर्थः। हे देव पू[illegible] वयं मंसीमहि स्तूयामहे इत्याशास्महे। कीदृशं। अस्माकं म[illegible] प्रज्ञानाञ्च शब्दादन्यस्य चेप्सितार्थस्य। साधनं साधयितारं[illegible] [illegible]। विप्राणां मेधाविनां त्वन्येषामपि। आ धवं परिचर्यात[illegible] [illegible]॥

प्रत्यर्धिर्यज्ञानामश्वहयो रथानाम् ।
ऋषिः स यो मनुर्हितो विप्रस्य यावयत्सखः ॥ ५ ।

प्रत्यर्द्धिः। ऋतु वृद्धो। प्रत्यर्धयिता धनदानेनाह। च संवर्धयिता यज्ञानामथवा यज्ञानां संवर्धयितः।

* निघण्टु १। ४॥

ऽस्यास्तीति प्रत्यर्थिः । अश्वहयः । हयतिर्गत्यर्थः । रथानां संबन्धिभिरश्वैर्गमनशीलः । अश्वयुक्तेन रथेन सदा गन्तेत्यर्थः । ऋषिर्द्रष्टा च । सर्वस्य लोकपालत्वात् प्रत्यवेक्षिता चेत्यर्थः । स पूषा । यः । कीदृशः । मनुर्हितः य इमं ? मनुष्यहितः । विप्रस्य मेधाविनश्च होतुः । यद्यत् सखः । यद्वाश्चासौ सखा चेति या पथि...। चापनेता उपद्रवाणां सखिभूतश्चेत्यर्थः ॥

आधीषमाणायाः पतिः शुचायाश्च शुचस्य च ।
वासोवायोऽवीनामा वासांसि मर्मृजत् ॥ ६ ॥

आधीषमाणायाः पतिः । स्वात्मन्याधीयमानाया स्तुतेराहुतेर्वा पति स्वामी । शुचायास्सर्वस्यादीप्तेश्च । शुचस्य च दीप्तस्य च सर्वस्य पतिः पूषा । वासोवायः अवीनामुरणानां सम्बन्धिनां वाससां दशापवित्रादीनाञ्च वता ? च पूषा प्रकाशोष्णाभ्यामनुगृह्णन् । वासांसि वस्त्राणि च रजकशोध्यानि । मर्मृजत् मर्यादया शोधयति पूर्वोक्तेनैव न्यायेन ॥

इनो वाजानां पतिरिनः पुष्टीनां सखा ।
प्र श्मश्रु हर्यतो दूधोद्वि वृथा यो अदाभ्यः ॥ ७ ॥

यः पूषा अदाभ्यो ऽदिंस्यस्स । इन ईश्वरस्सर्वस्य वाजानां च । पति स्वामी । इनः ईश्वरः । पुष्टीनां सर्वेषां प्राणिनां पोषणानां करणे । सखा सखिभूतश्च सर्वस्योपकारित्वात् । किञ्च । हर्यत. कामयमानस्य भक्तत्वात् सुप्रतीकस्य यजमानस्य । षष्ठीश्रुते स्वभूतं सोमं पिबन्निति शेषः । श्मश्रुर्विवृथा प्र......धोत् अधूनोत् विविधं प्रकर्षेण यत्नेन कंपयति ॥

आ ते रथस्य पूषन्नजा धुरं ववृत्युः ।
विश्वस्यार्थिनः सखा सनोजा अनपच्युतः ॥ ८ ॥

आ ते रथस्य । विश्वस्य हे पूषन् यस्त्वं विश्वस्यार्थिनो याचकस्य सखेप्सितार्थप्रदातृत्वात् सखिभूतः । सनोजाश्चिरजातश्चानपच्युत स्वाधिकारादनपगतश्च तस्य । ते तव स्वभूतस्य । रथस्य धुरं । हे पूषन् । अजजातियुक्ता अश्वाः । आ ववृत्युरावर्तयन्ति वहन्तीत्यर्थः ॥

अस्माकमूर्जा रथं पूषा अविष्टु माहिनः ।
भुवद्वाजानां वृध इमं नः शृणवद्धवम् ॥ ९ ॥

अस्माकं स्वभूतं । रथं रंहितारं देवान् प्रति परिसमाप्तिं वा गन्तारं यज्ञहविर्धानशकटयोः । ऊर्जा स्वबलेनान्नेन रसेन वा हविराख्येन लब्धव्यत्वेन भोक्तव्यत्वेन च निमित्तभूतेन पूषा । अविष्टु अवतु रक्षतु । माहिनो महान् । भुवत् भवतु च । वाजानामन्नानां । वृधः वर्धयिता तदर्थञ्च । इमं । नः अस्माकं । शृणवत् शृणोतु । हवा महाह्वानं ॥

---

[ सप्तविंशं सूक्तम् ]

उत्तरं सूक्तमसत्सु मे जरितस्सः चतुर्विंशत्यृचमैन्द्रमिन्द्रपुत्रो वासुक्रो ददर्श । वासुकेषु सूक्तेषु बाहुल्येनेन्द्रस्य स्तुतिः । स्तोतुमुद्यतं स्वपुत्रमृषिं वसुक्रं संबोध्य स्वसामर्थ्यं* कथयतीन्द्रः । विज्ञातदेवतास्वरूपो येन सुखं स्तोष्यतीति । अथवा कार्यकारणयोरेकत्वोपचारात्—आत्मा वै पुत्र नामासि† इति वचनाच्च । *इन्द्ररूपेणावस्थितो वसुक्र आत्मानं स्तौति क्वचित् क्वचिन्मन्त्रे । क्वचिदिन्द्रं भेदेन ॥

असत्सु मे जरितः साभिवेगो यत्सुन्वते यजमानाय शिक्षम् ।
अनाशीर्दामहमस्मि प्रहन्ता सत्यध्वृतं वृजिनायन्तमाभुम् ॥१॥

हे जरित स्तोतः ।* असदस्ति विद्यते । [मे] ममेन्द्रस्य । सु शोभन ऊर्जितः । स अभिवेगः । ओविजी भयचलनयोः । अर्थिनं प्रति मनसोऽभिचलनमभिगमनं वृत्तिविशेषः । यत् येन वेगेन मनोवृत्त्या । सुन्वते मदर्थं सोमाभिषवं कुर्वते । यजमानाय यज्वने । शिक्षं ददामि प्रार्थितमर्थं । किञ्चानाशीः [दां । आशीः] प्रार्थनोच्यतेऽन्यत्र । इह सामर्थ्यात् प्रार्थितं हविरुच्यते । प्रार्थितं हविर्मह्यमददतमधिकृतं पुरुषं । अथवाशीरिति सोमाधिश्रयणं दध्युच्यते । तस्य दातारमसोमयाजिनमित्यर्थः । अहमस्मि भवामि । प्रहंता प्रकर्षेण हिंसिता । सत्यध्वृतं । ध्वरति हिंसार्थः । सत्यस्य च हिंसितारमनृतवादिनञ्चेत्यर्थः । वृजिनायंतं कुटिलं च कर्तुमिच्छन्तं । परवञ्चनपरञ्चेत्यर्थः । आभुमंहान्तमपि हिंसितास्म्यहम् ॥

---

*इतोऽनन्तरं-इन्द्ररूपेण-इत्यारभ्य-स्तोतः तस्मिन्-इत्यन्तो लेखकप्रमादाद् उत्तरस्थलस्थः पाठो ऽत्र लिखितः । † श० ब्रा० १४ । ९ । ४ । २६ ।

यदीदहं युधये संनयान्यदेवयून्तन्वा३ शूशुजानान् ।
अमा ते तुम्रं वृषभं पचानि तीव्रं सुतं पंचदशं नि षिंचम्॥२॥

इच्छन्द पदार्थः। उत्तरार्धस्यादावहं शब्देन सह संबन्धयितव्यः। यदि यदाहं। युधये युद्धार्थं। सनयानि अदेवयून् देवान् यष्टुमनिच्छतः देवशून्यजनः। तन्वा स्वशरीरेण। शूशुजानान्। शुचेश्चकारस्य जकारश्छान्दसः। शोशुचानानात्ममरित्यात् पुण्या दीप्त्या च युक्तान् पुणानित्यर्थः। तदाहमेव अथ अमा आत्मना हेतुकर्तृत्वेन यजमानं वाधिष्ठाय। ते तव यजमानस्य स्वभूतं। तुम्रं पीवानं। वृषभं। धेनुर्वृषभ इति श्रुतेः। धेनुं गां। पचानि मदर्थं पचामीति। प्राप्तरसं। सुतमभिषुतं। पञ्चदशं सोमं पूर्वपक्षापरपक्षसंबन्धिपञ्चदशसंख्यायुक्तातिथिसंबन्धेन वर्णवृद्धिह्रासयोगात् पञ्चदशस्सोमः। तं च मदर्थमहं निषिञ्चं दशापवित्रे द्रोणकलशे चमसपात्रे वा। सिञ्चामि प्रक्षिपामीत्यर्थः॥

नाहं तं वेद य इति ब्रवीत्यदेवयून्त्समरणे जघन्वान् ।
यदाव्याख्यत्समरणमृघावदादिद्ध मे वृषभा प्र ब्रुवन्ति ॥३॥

मद्व्यतिरिक्तं पुरुषमहन्न वेद जानामि। यः पुरुष इति एवं ब्रवीति वक्ति। अदेवयून् देवानकामयमानान्देवद्विषोऽसुरादीन् समरणे संग्रामे। जघन्वान् हतवानहमिति। मत्तोऽन्यस्संग्रामे शत्रूणां हन्ता नास्तीत्यर्थः। किञ्च। यदा यस्मिन् काले। अवाख्यत्। उत्तमस्य स्थाने* प्रथमः। यदावाख्यत् अवाख्यं न्यक्कृत्यमृतवत् पश्यामि। समरणं संग्रामं। कीदृशं ऋघावत्। द्वितीयाया लुगत्र द्रष्टव्यः। ऋघायन्तं हिंसावन्तं परस्परमतिक्रामित्यर्थः। आत् तदा। इद्ध इति पदपूरणौ। मे मम स्वभूता। वृषभकर्माणि दर्पितवृषभस्येव विक्रान्तानि शत्रुवधवन्ति निर्भयचेष्टितानि। प्रब्रुवन्ति प्रकथयन्ति विद्वत्संघाः वर्णयन्ति ॥

यदज्ञातेषु वृजनेष्वासं विश्वे सतो मघवानो म आसन् ।
जिनामि वेत्क्षेम आ सन्तमाभुं प्र तं क्षिणां पर्वते पादगृह्य ॥४॥

शरीरशास्त्रास्त्रबलतः परिमाणतश्चापरिज्ञातेषु । वृजनेषु

* इतोऽनन्तरं—देवद्विषो—इत्यारभ्य-स्थाने—इतिपर्यन्तः पाठः लेखकप्रमादात् पुनर्लिखितः।

संग्रामेषु । आसं उपविशामि युद्धार्थमुपतिष्ठामीत्यर्थः । तदा । विश्वे सर्वे । सतो मां प्रति प्राप्ताः । मघवानः हविर्धनेन तपोधनेन च धनवन्त ऋषयः । मे ममेन्द्रस्य समीपे । आसन्नुपविशन्ति वीर्यवृध्यर्थमास्तुवन्तस्तिष्ठन्तीत्यर्थः । किञ्च । जिनामि वा जानाम्येव नात्र संशयः । इति पदपूरणः । क्षेमे जगत्पालननिमित्ते । आ सन्तं । आङ्त्राभीत्येतस्य स्थाने । सर्वमभिभवन्तमित्यर्थः । आभुं महान्तं शत्रुं यस्तु महतः न्यूनं । तं प्र क्षिणां प्रहिनस्मि प्रक्षिपामि । पर्वते गिरौ । पादगृह्य पादे गृहीत्वा ॥

न वा उ मां वृजने वारयन्ते न पर्वतासो यदहं मनस्ये ।
मम स्वनात्कृधुकर्णो भयात एवेदनु द्यून्किरणः समेजात् ॥५॥

न मामिन्द्रं । वृजने संग्रामे । युद्धार्थमुपस्थितं सन्तं । वारयन्ते निवारयितुं शक्नुवन्ति शत्रवः । नापि पर्वतासः हिमवदादयो गिरयः अतिभाक्षमाः ?। यत् कर्माहं । मनस्ये मनसा कर्तुमिच्छामि तत् कर्म मनसाप्युद्धाष्टाक्रन्तयितुं न शक्नुवन्तीत्यर्थः । किञ्च । ममेन्द्रस्य । स्वनात् । स्तनितशब्दात् । संग्रामकाले हुंकारशब्दाद्वा । कृधुकर्णो नामासुरोऽथवा कृधुकर्णो मन्दश्रवणेन्द्रियः । बधिरः स्थावरपिपीलिकपुत्तिकादिरपि । भयाते बिभेति । किञ्च । एव इव एवमेव । कृधुकर्णवन्ममं भयादनु द्यून् प्रतिदिनमित्यर्थः । किरणः । अन्तर्णीतमत्वर्थमेतत् पदं । किरणवान् रश्मिवानादित्यः । समेजात् सम्यक् कंपते चलति । नियमेन प्रयातीत्यर्थः ॥

दर्शन्न्वत्र शृतपाँ अनिन्द्रान्बाहुक्षदः शरवे पत्यमानान् ।
घृषुं वा ये निनिदुः सखायमध्यू न्वेषु पवयो ववृत्युः ॥६॥

दर्शं अपश्यमहं पुनः दृष्टवानस्मीत्यर्थः । अत्रास्मिञ्जगति । शृतपान् शृतस्य पक्वस्य सोमादिकस्य हविषः अपहृत्य पातॄन् । अनिन्द्रान् इन्द्रेणेश्वरेण मया वर्जितानतीश्वरान्वा । बाहुक्षदः महाबलत्वादायुधेन विना बाहुभ्यामेव हिंसितॄन् । शरवे शरुदरः । तृतीयार्थे चतुर्थी । सर्वेषेत शरेण । उ क्षिप्तं । पत्यमानान् पात्यमानात् असुरान् । किञ्च । घृषुं वा । समुच्चयार्थोऽत्र वा शब्दः । महान्तञ्च मां । ये सुरा[न्] नि[नि]दुः निन्दन्ति । सखायं भक्तानां सखिवत् प्रियहितस्य

कर्तारं । अधि उ नु पप्तु । अधीत्युपरिभावे । उ इति पदपूरणः । नु इति क्षेप्रार्थः। पप्तुरित्येतेन संबन्धयितव्यः। अधि पप्तोन्निम्नेन्द्रितृणामुपरि पवयः। पविरिति वज्रनाम ।* बहुवचनसामर्थ्याद्वज्रादीन्यायुधानीत्यर्थः। नु क्षिप्रं । पप्तुरुत्पुर्वर्तन्ते पतन्तीत्यर्थः ॥

अभूर्वौक्षीर्व्यु१ आयुरानड्दर्षन्नु पूर्वो अपरो नु दर्षत् ।
द्वे पवस्ते परि तं न भूतो यो अस्य पारे रजसो विवेष ॥७॥

अभूर्वौक्षिः । मध्यमपुरुषेण प्रथमपुरुषेण च इन्द्रस्योच्यमानत्वादनयेन्द्रं१ स्तौति वसुक्रः । अभूः उ औक्षीः । उ इत्ययमेवार्थे । औक्षिरित्युभाक्तत्वान्नामपदमेतत् । हे इन्द्र अभूः भवसि । त्वमेव । औक्षिः उक्षिता सेक्ता वृष्टेः क्षरिता वर्षिता त्वमेव भवसि नान्य इत्यर्थः । किञ्च । वि आयुः आनट् । मध्यमपुरुषेण प्रक्रान्तत्वादेकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः । सर्वत्रानाडित्यादौ परोक्षनिर्देशे प्रत्यक्षीकरणार्थमध्याहर्तव्यः । वि इति वैविध्ये । उ इति चार्थे । आयुरिति जीवितमुच्यते । आनडिति व्याप्तिकर्मा ।† विविधञ्चायुर्भवानिन्द्रः प्राप्नोति । आ महाभूतसंप्लवाच्च जीवतीत्यर्थः । दर्षत् नु । दृ विदारणे । लिङ्बहुलं । नु इति क्षिप्रार्थे । शत्रुं वज्रेण विदारयति च क्षिप्रं भवानिन्द्रः । पूर्वः जगत्स्थितेरिन्द्राधीनत्वात्सर्वस्माज्जगतः पूर्वजातश्च । भवानिन्द्र इत्यर्थः । अपर नु दर्षत् । अपर शब्दोऽन्यवचनः । नु इति प्रतिषेधे । अन्यो न विदारयिता भवन्तमिन्द्रं भवानेव सर्वं शत्रुजातं हिनस्तीत्यर्थः । किञ्च । यो भवानिन्द्र अस्य त्रैलोक्यस्य । पारे परतः परमसूक्ष्मवायुरूपेण समष्टिव्यष्टिसृष्टिकारणात्मना स्थित्वेति शेषः । विवेष व्याप्नोति सर्वत । तं भवन्तमिन्द्रं न परिभूतः अभिभवितुं न शक्नुत इत्यर्थः । द्वे अग्नेः सामर्थ्याद् द्यावापृथिव्यौ । कीदृश्यौ । पवस्ते । पूं गताविस्यस्य धातोरौणादिके अस्तप्रत्यये परतः ॥

गावो यवं प्रयुता अर्यो अक्षन्ता अपश्यं सहगोपाश्चरंतीः ।
हवा इदर्यो अभितः समायन्कियदासु स्वपतिश्छंदयाते ॥८॥

* निघण्टु॰ २ । ११ ॥ † निघण्टु॰ २ । १८ ॥

यवं यवसी हीदं सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न ।* इति वचनात् सर्वस्य जगतः स्थितिहेतुभूता या गावः । यवं मदूत्पृष्टिजनित-यवादिघासमित्यर्थः । भक्षयन्तीति परया प्रीत्या दृश्यमानाश्च । ता गावः । हवा वाहनदोहनार्थं आह्वानार्हाः । इदिति पदपूरणः । अर्यस्याधिकारं प्रत्यगच्छन्। अभितः सर्वतः । सर्वाभ्यो दिग्भ्य इत्यर्थः । सं आयन् । समित्येकीभावे ।† एकीभूय यूथशः आगच्छन्त्यः । हन्यहनि ग्रहात् प्रतितृप्तास्सत्यः आगतास्तासु गोषु । कियदपि क्षीरं यथा सुरूपं । स्वपतिः स्वासां स्वासां गवां स्वामी । छन्दयाते दोग्धुं कामयते । मदर्थं दोग्धीत्यर्थः । इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु । यत्सीमुपह्वरे विदत् ।‡ इति वचनात् । अथवा गावः स्वाधिकारं प्रतिगन्त्र्यः प्रजा ब्राह्मणाद्याः । यवं मदूत्पृष्टिजनितं यवाद्यन्नं । प्रयुताः प्रमिश्रिताः परस्परेण सहभूताः । अक्षन् अदन्ति । ताः गवाख्याः । अहमर्यः सर्वस्य स्वामी । अपश्यं परया प्रीत्या पश्यामि । सहगोपाः प्रजापावन-प्रजापतिना सहिताः । चरन्तीः मदूत्पृष्टिजनितयवाद्यन्नं भक्षयन्ति । मया परया प्रीत्या दृश्यमानाश्च गोसंज्ञाः प्रजा आह्वातव्याः मत् परिचर्यार्थमभित्वात् प्रजीविनस्य मामेवेश्वरमाराधयन्तीत्यर्थः । कियदपि स्तुतिजातं हविर्जातञ्च । आसु प्रजासु स्थितं । स्वपति आत्मीयपतिः । प्रजापतिः । छन्दयाते कामयते । प्रार्थनया चात्र कंपूर्वको लाभो लक्ष्यते । अतिस्तोकं लभते इत्यर्थः ॥

सं यद्वयं यवसादो जनानामहं यवाद उर्वज्रे अन्तः ।
अत्रा युक्तोऽवसातारमिच्छादथो अयुक्तं युनजद्ववन्वान् ॥९॥

पुरुष एवेदं सर्वं ।§ सर्वं खल्विदं ब्रह्म ।¶ इत्यादि वचनात् कारणात्मनः सर्वात्मकत्वात् अहमेव सम्यक् ज्ञानयोगात् कारणात्मरूपेण स्थित्वा स्थावरजंगमलक्षणं यवद्द्विपाच्चतुष्पादादिकञ्च सर्वमुत्पादयामि इति कारणात्मरूपेणात्मानमिन्द्रः स्तौति । जनानां सर्वप्राणिनां । यदत्तव्यं यवसं यवाद्यन्नञ्च तस्य सर्वस्य यवसस्य

* शतपथ० १४ । ४ । ३ । १ ॥
† निरुक्तं १ । ३ ॥
‡ ऋ० ८ । ६९ । ६ ॥
§ ऋ० १० । ९० । २ ॥
¶ छान्दो० उप० ३ । १४ । १ ॥

यवाद्यन्नस्य च ययमेव सम्यगत्तारो द्विपद्चतुष्पदादीनां कार्यरूपेण स्थित्वाहमेव कारणरूपेण स्थित्वा सर्वस्य यवादिकान्नस्यात्ता। क स्थितस्सन् अत्ता त्वमुच्यते। उरु अज्रे अन्तः। उरु विस्तरेण। अज गतिक्षेपणयोः। अन्तरिति सामीप्यवचनः। विस्तीर्णस्य जनस्य गमनस्य जगतो मध्ये स्थितस्सन् अत्तासीत्यर्थः। अनेकजन्मसंसिद्धस्ततो याति परां गतिं।* इति वचनान्मोक्षस्य दुष्प्रापत्वात्। अत्रास्मिन्नेव जन्मनि। अवसातारं संसारान्तस्य कर्तारं मोक्षं गमयितारं मामेव। इच्छात् आराधयितुं इच्छति। कः। योगीन्द्र एव संसारसागरादुद्धर्त्ता नान्य इति परया भक्त्या योऽयमाराधयति योगेन तमहमस्मिन्नेव जन्मनि संसारान्मोचयामीत्यर्थः। अथो अपि च। अयुक्तमयोगिनं। युनजत्। उत्तमस्य स्थाने प्रथमोऽयं। युनज्यात्मना संसारान्मोचयामीत्यर्थः। ववन्वान् संभजन्नहं यदि कामयेयमित्यर्थः ॥†

अत्रेदु मे मंससे सत्यमुक्तं द्विपाच्च यच्चतुष्पात्संसृजानि।
स्त्रीभिर्यो अत्र वृषणं पृतन्यादयुद्धो अस्य विभजानि वेदः ॥१०॥

अत्र इच्छन् एवार्थः। सत्यशब्दापरो द्रष्टव्याः?। उ इति पदपूरणः। अत्रास्मिन्मे मम स्तोत्रं। मंससे जानीहि त्वं। सत्यमित् उक्तं यथार्थमेव कथितं मया। नार्थवादरूपेणाध्यारोपितः गुणमेतत् स्तोत्रमित्यर्थः। किञ्च। द्विपाच्च मनुष्यजातिकं चतुष्पाच्च गवादिकं। सामर्थ्यादन्यदपि बहुपादेकपादादिकं स्थावरजंगमं यत्तत् सर्वमहमेव। संसृजानि उत्पादयानीति जानीहि त्वं। किञ्च। स्त्रीभिः स्त्रीसदृशैः बलपौरुषनयवर्जितैः पुरुषैस्सह। यः पुरुषः शूरम्मन्यः। अत्रास्मिञ्जगति। वृषणमुदकं वृष्टेरायुधवृष्टेर्वा वर्षितारं मां परित्यज्येति शेषः। पृतन्यात् पृतन्यमिति पृतनां संग्रामं युद्धं कर्तुमिच्छति। तस्यास्य ईदृशस्य पुरुषस्य स्वभूतं। वेदो धनमयुद्धः युद्धवर्जितः। तेन तादृशेन पुरुषेण सह अयोद्धा सन्नहं बलादपहृत्य। वि भजानि स्वसैनिकेभ्य स्तोतृभ्य यष्टृभ्यश्च ददामीत्यर्थः ॥

---

* भगवद्गीता ६ । ४५ ॥

† मोक्षमूलरसंस्करणे ऽस्य मन्त्रस्य भाष्यं त्रुटितमस्ति। स्वकल्पनया सम्पादकद्वयेनभाष्यं पूरितम्। अहो दुस्साहसं [illegible] शिवरामयोः ॥

यस्यानक्षा दुहिता जात्वास कस्तां विद्वाँ अभिमन्याते अन्धाम् ।
कतरो मेनिं प्रति तं मुचाते य ईं वहाते य ईं वा वरेयात् ॥११॥

यस्य ममेन्द्रस्य कारणात्मरूपेणावस्थितस्य सतः । अनक्षा अक्षिवर्जिता दर्शनहीना अचेतनेत्यर्थः । दुहिता प्रकृत्याख्या । जातु आस । सर्वमोक्षपक्षे महाप्रलये वा सामर्थ्यान्मय्येव लीना यदि भवति । कः पुरुषो मत्तोऽन्यः । तां मम दुहितरं प्रकृत्याख्यां मय्येव लीनां । विद्वान् सर्वज्ञ इत्यर्थः । अभि मन्याते आत्मन्याश्रयप्रदानेनाभि पूजयामि । क्षीरोदकवन्मया सहैकीभूतां तत्त्वतो जानामीव नान्य इत्यभिप्रायः । किञ्च । कतरो वा मत्तोऽन्यः पुरुषः । मेनिं वज्रं । तं शत्रुं प्रति । मुचाते मुञ्चति । स्वयमेवमुत्थाप्येदानीं प्रतिवक्ति । यः पुरुषः । ईमेनं शत्रुं प्रति । वहाते प्रतिवहति प्राप्नोति धनार्थं गच्छति । यो वा पुरुषः । ईमेनं शत्रुं । वरेयात् युद्धाय वरयितुमिच्छति । युद्धं प्रार्थयत इत्यर्थः । स चाहमेव नान्य इत्यर्थः ॥

कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण ।
भद्रा वधूर्भवति यत्सुपेशाः स्वयं सा मित्रं वनुते जने चित् ॥१२॥

कियती किंपरिमाणा । योषा स्त्रीजातिः । मर्यतः मनुष्यधर्मान् संभोगादिधर्ममिच्छतः पुरुषस्य । वधूयोः वधुकामस्य स्त्रीकामस्येत्यर्थः । परिप्रीता परिकृष्टा अनुरक्ता वशवर्तिनीत्यर्थः । पन्यसा स्तोत्रेण । वार्येण वरणीयेन शोभनेन सर्वगुणग्राहिणा । स्तुतस्यापि सता इतिशेषः । सर्वगुणोपेतस्यापि सत इत्यर्थ । मम पुनरीश्वरस्य सर्वात्मकस्य सर्वस्य नियन्तुरन्तर्यामिरूपेणावस्थितस्य इन्द्रस्य सावेवस्ती ? प्रकृत्यादिका परिप्रीता अनुवर्ता वशवर्तिनीत्यभिप्रायः । किञ्च । भद्रा [कल्या]णी सर्वगुणोपेता । सुपेशाः सुरूपा च भवति । यत् या । वधूः स्त्री द्रौपदीदमयन्त्यादिका सा स्वयमात्मनैव यं मित्रं स्निग्धं पतिमर्जुनं नलादिकं । वनुते स्वयंवरधर्मेण प्रार्थयते । जने चित् परजनमध्यस्थितं । स च प्रियमाणो वरनरः अहमेवेत्यभिप्रायः । रूपं रूपं प्रतिरूपो बभूव ।* इति मन्त्रलिंगात् सर्वात्मकत्वात् ॥

* ऋ० ६ । ४७ । १८ ॥

पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम् ।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम् ॥१३॥

अनया वासुक स्तौतीन्द्रं । अत्र सामर्थ्यादुदकनिर्देशप्रतिनिर्देशार्थो द्वितीयान्तो यच्छब्दो ऽध्याहार्यः । यदुदकं भौमरसलक्षणं मण्डले संभृतं परिपक्वं वा । पत्तः पादैः रश्म्याख्यैः । जगार । जिगर्त्ति गिरति कर्मा वा गृह्णाति । पृथिवीपतिः मध्यस्थानमिन्द्रं प्रति निगिरति वादित्यः । तमुदकमिन्द्रः । प्रत्यञ्चमात्मानं प्रत्यञ्चितं गतम् । अत्ति भक्षयति उपर्युक्ते स्वीकरोतीत्यर्थः । स्वीकृत्य च शीर्ष्णा अन्तरिक्षलोकस्य शिरोभूतेन विद्युदात्मना स्थित्वा पृथिवीनिवासिनो लोकस्य । शिरः प्रति दधौ निदधाति प्रतिक्षिपति । वरूथं वरणीयं वृष्ट्युदकं । न केवलं शिरः प्रति निदधाति । किं तर्हि । आसीनः उपविष्टः । क । उपसि उपस्थे स्वसमीपे स्थाने ऽन्तरिक्षे । ऊर्ध्वामपि वृष्टिं । क्षिणाति । क्षि हिंसायां । हिनस्ति क्षिपतीत्यर्थः । किञ्च । न्यङ् नीचैरञ्चितस्सन् वाय्वात्मना तिर्यङ्गतिः सन्नित्यर्थः । उत्तानामनु पति आनुपूर्व्येण गच्छति । भूमिं । अथवा तेनेन्द्रो क्षिप्तञ्च सत्तद् वृष्ट्युदकं न्यङ् । लिंगव्यत्ययो ऽत्र कर्तव्यः । न्यङ् नीचैरञ्चितस्सन् उत्तानामन्वेति । यथा निम्नामन्वेति अनुगच्छति भूमिं ।

अथवा आदित्यात्मना इन्द्र स्तूयते । तदंशत्वादिति । अस्य पादैरश्म्याख्यैः भौमरसलक्षणमुदकं गिरति गृह्णाति वादित्यः । गृहीत्वा च प्रत्यञ्चमात्मानं प्रतिगतम् । अत्ति भक्षयति स्वीकरोति मण्डले स्थापयतीत्यर्थः । अवस्थाप्य च परिपक्वस्सन् वर्षासु प्राप्तासु शीर्ष्णा शिर स्थानीयेन रश्मिजालेन सर्वलोकस्य । शिरः प्रति दधौ दधाति क्षिपतीत्यर्थ. । वरूथं वरणीयं वृष्ट्युदकं । किञ्चासीन उपविष्टः । क । उपसि उपस्थे स्वसमीपे स्थाने मण्डले दिवि वा । ऊर्ध्वां स्वदीप्तिं रश्मिजाललक्षणां । क्षिणाति हिनस्ति आलोककरणाय व्याप्नोतीत्यर्थः । किञ्च । न्यङ् रश्मिजालरूपेण नीचैरञ्चिता गन्ता सन् । उत्तानां भूमिमन्वेति अनुगच्छति तिर्यगूर्ध्वमधश्च सर्वरश्मिजालेनालोककरणाय व्याप्नोतीत्यर्थः ॥

वृहन्नच्छायो अपलाशो अर्वा तस्थौ माता विषितो अत्ति गर्भः।
अन्यस्या वत्सं रिहती मिमाय कया भुवा नि दधे धेनुरूधः॥१४॥

विद्युदात्मनेन्द्र स्तूयते । वृहन् महाविद्युद्वृक्षरूपः इन्द्रः। अच्छायः छायारहितः । तमोवर्जित इत्यर्थः । अपलाशः पर्णरहितश्च । अथवा- पलाशः पराशदनवर्जितः विनाशरहित इत्यर्थः । अर्वा अर्ता सर्वत्र गामी चेत्यर्थः । तस्थौ तिष्ठति । विषित- विमुक्तः निरालंबन इत्यर्थः । महावृष्टिप्रदानद्वारेण सर्वस्य जगतो निर्माता च । अत्ति भक्षयति च हवींषि । अथवाऽदनेन विनाशं लक्ष्यते । दुष्कृतो विनाशयति । विभागः मेघस्य गर्भभूतश्च अनर्थानां गरिता वा । किञ्च । अन्यस्या आदित्या- ख्याया देवमातुः । वत्समपत्यमिन्द्रं विद्युन्मयं । रिहती आस्वादयन्ती उपजीवन्ती वर्धन्ती पूजयन्ती स्तुवन्ती वा । मिमाय निर्मिमीते वर्षासु मेघजातिः । कया भुवा केनाविभावेनाभिप्रायेण । भक्त्या भयेन चेत्यर्थः। नि दधे स्वोदरे निदधाति च । धेनुः । धेनुर्धयतेर्वा धिनोतेर्वा ।* सर्वस्य वृष्ट्युदकं पाययित्री वृष्ट्युदकेन प्रीणयित्री चेत्यर्थः । ऊधः उदकाधार- त्वादुदकस्थानीयमिन्द्रं विद्युद्रूपं ।

अथवादित्यात्मने[न्द्र]स्तूयते तदंगत्वादादित्यस्य । वृहन्महानादि- त्यो वृक्षः । अच्छायः छायारहितः तमोरहित इत्यर्थः । अपलाशः पर्ण- रहितश्च । अथवापलाशः पराशदनात् पराशदनरहितश्चेत्यर्थः । अर्ता सर्वत्र गामी द्युलोकगामी चेत्यर्थः । तस्थौ तिष्ठति च । कथं । विषितं विमुक्तः निरालंबन इत्यर्थः । माता निर्माता च सर्वस्य-वृष्टिद्वारेण । अत्ति भक्षयति च हवींषि । अथवादनेनात्र विनाशं लक्ष्यते । दुष्कृतो विनाशयतीत्यर्थः । गर्भभूतश्च दिवः त्रैलोक्य ? घान्तर्वर्तित्वात् । अथवा गर्भो गृह्णात्यर्थे । गिरत्यनर्थानिति वा ।† भौमान् रसान् रश्मिभिः गृह्णाति गिरति चेत्यर्थः । किञ्चान्यस्याः देवमातुरदितेः । वत्समपत्यमादित्यं । रिहती आस्वादयन्ती उपजीवन्ती स्तुवन्ती वा । मिमाय निर्मिमीते । पूर्वस्यां दिश्यहन्यहनि उत्पादयन्तीत्यर्थः । कया भुवा केनाविभावेन भक्त्या भयाद्वेत्यर्थः । नि दधे स्वोदरे निदधाति च । धेनुरिव ऊधः ।

* निरुक्तं ११ । ४२ । † निरुक्तं १० । २३ ।

अथवा धेनुस्थानीया द्यौरुदकस्याधारत्वात् क्षरितत्वाच्च ऊध स्थानीय-मादित्यं ॥

सप्त वीरासो अधरादुदायन्नष्टोत्तरात्तात्समजग्मिरन्ते ।
नव पश्चातात्स्थिविमन्त आयन्दश प्राक्सानु वि तिरन्त्यश्नः ॥१५॥

प्राजापत्यात्मनेन्द्र स्तूयते । सप्त ऋषयो विश्वामित्रादयः । वीरासः प्रजापतेः पुत्राः । अधरात् प्रजापतेरधः कायात् । उदायन् उत्पन्न इन्द्र इत्यर्थः । अष्टौ ये वसवः । के । उत्तरात्तात् उत्तरात् प्रदेशात् । समजग्मिरन् सुसङ्गत्रिर इत्यर्थ । नव भृगवः । स्थिविमन्त स्थिविहलजंमाया ? चात्र कर्षणमुपलक्ष्यते । कृषिमन्त इत्यर्थः । पश्चातात् पृष्ठतः । आयन् आगा उत्पन्ना इत्यर्थः । दश अंगिरसः । प्राक् अग्रतः उत्पन्नाः सन्त इति शेप । सानु समुच्छ्रितं प्रदेश । वि तिरन्ति विवर्धयन्ति । अश्न· अशनवतो द्युलोकस्य ॥

दशानामेकं कपिलं समानं तं हिन्वन्ति क्रतवे पार्याय ।
गर्भं माता सुधितं वक्षणास्ववेनन्तं तुपयन्ती बिभर्ति ॥ १६ ॥

दशानामङ्गिरसां मध्ये । एकं प्रधानं । कपिलं कापिलनामानमृषिं । समानं सामर्थ्येन तुल्यं । केन । सामर्थ्यात् प्रजापतिना । अत्र हिन्वन्ति-शब्दात् पूर्वो यच्छब्दोऽध्याहार्यः । तच्छब्दश्च गर्भशब्दात् पूर्वो द्रष्टव्यः । यं हिन्वन्ति गमयन्ति प्रेरयन्ति । ते चांगिरसोऽवशिष्टाः । किमर्थं । क्रतवे यज्ञादिजगत्प्रवर्तनकर्मणे । प्रज्ञानाय वा । सम्यक्ज्ञानलक्षणाय । पार्याय पारं प्रापणीयाय परिसमापयितव्या यज्ञ यज्ञादिकर्मोपदेशनाय सम्यक् ज्ञानोपदेशनाय चेत्यर्थः । तं प्रजापतेर्गर्भं । माता प्रकृतिः । सुधितं सुहितं सुस्थापितं प्रजापतिना । वक्षणासु । वक्षणा इति नद्य उच्यन्ते ।* ताभिश्चात्र प्रकृतिस्थाः सूक्ष्मा आपो लक्ष्यन्ते । प्रकृतिस्थः सुसूक्ष्मः सरः स्वप्स्वित्यर्थ. । अवेनन्तं गर्भवासमकामयमानं तुपयन्तीति । सम्यक् ज्ञानादुपदेष्टुं योग्योऽयमिति प्रीता सती । बिभर्ति धारयति प्रजापतिनियोगात् ॥

---

* निघण्टु १ । १३ ॥

पीवानं मेषमपचन्त वीरा न्युप्ता अक्षा अनु दीव आसन् ।
द्वा धनुं बृहतीमप्स्वं१न्तः पवित्रवंता चरतः पुनन्ता ॥ १७ ॥

पीवानं स्थूलं मेदोयुक्तं। मेषमपचन्त प्रजापतिरूपस्येन्द्रस्यार्थाय पक्वन्तः। पशुयागं कृतवन्त इत्यर्थः। वीराः प्रजापतेः पुत्राः अंगिरसः। किञ्च। न्युप्ताः निक्षिप्ता सन्तः द्वयोरेकतरस्यानुगता भवन्त्येवं प्रजापतेरनु आसन् अनुगता भूताः अंगिरसः। किञ्च। द्वा अंगिरसामेव मध्ये द्वौ कौचिदंगिरसौ। धनु धनुशब्दोऽत्र धनु शब्दपर्यायः। धनशब्दपर्यायो वा। धनुर्यथा वधसाधनमेवमज्ञानादिवधसाधनं। धनवत् प्रीतिसाधनं वा। कपिलमित्यर्थ। बृहतीं। बृह वृद्धौ। प्रजापत्यादेशात् वर्धयित्रीं प्रकृतिं वर्धयित्रीमुच्यते। अप्स्वन्तः प्रकृतिस्थानां परमसूक्ष्माणामपां मध्ये। पवित्रवन्ताः। मन्त्रः पवित्रमुच्यते।* ध्यानसाधनप्रणवमन्त्रवन्तौ। चरतः परिचरितः प्रजापत्यादेशादाराधयतः। प्रणवध्यानेनात्मानं संस्कुर्वन्तौ॥

वि क्रोशनासो विष्वंच आयन्पचाति नेमो नहि पक्षदर्धः ।
अयं मे देवः सविता तदाह द्रुन्न इद्वनवत्सर्पिरन्नः ॥ १८ ॥

विक्रोशनासः प्रजापतिं पितरं विविधमाह्वयन्तः। विष्वञ्चः नाना गतय. पूजना वा। आयन् आगताः। प्रजापतेस्सकाशादुत्पन्ना इत्यर्थ.। के अंगिरसः सर्वा प्रजा वा उत्पाद्य। पचाति प्रजापत्यर्थः। यज्ञेषु हर्षोपि पचति। नेमः अंगिरसां सर्वप्रजानां वार्धः। न हि पक्षत् न पचति। अर्धः तदेतत्सर्वं केन तव कथितमिति चेत्। उच्यते। अयं देवः सविता सर्वस्य प्रसवितादित्यः। प्रजापतिर्वा। मे मम। तदेतत्सर्वं यथोक्तम्। आह कथितवान्। किञ्च। द्रुघ्नः इत् दार्वण. सर्पिरन्न. सर्पिरन्नश्च। अग्निरपि वनवत् हविर्वहनद्वारेण प्रजापतिं वनति संभजते॥

अपश्यं ग्रामं वहमानमारादचक्रया स्वधया वर्तमानम् ॥
सिषक्त्यर्यः प्र युगा जनानां सद्यः शिश्ना प्रमिनानो नवीयान् ॥ १९॥

---

* निरु० ५। ६॥

अपश्यमागमेनार्षेण वा ज्ञानेन साथद्वा दृष्टवान् अहमस्मि वसुक्रः प्रजापतिरूपमिन्द्रं । किं कुर्वन्तं दृष्टवानसि । उच्यते । ग्रामं भूतसंघातं । वहमानं प्रापयन्तं सृजन्तमित्यर्थः । कुतः । आरात् उपादानकारणात् प्रकृतित इत्यर्थः । किञ्चान्यत् कुर्वन्तमपश्यम् । अचक्रया स्वधया अन्नेन । वर्तमानमात्मस्थितिञ्च कुर्वन्तमपश्यन्तं । उक्तञ्च मन्त्रान्तरे—आनीदवातं स्वधया तदेकमिति ।* किञ्च । प्र सिषक्ति प्रकर्षेण सेवते । अर्यः अर्येश्वरः प्रजापतिः । युगा युगानि यागकालान् । यजमानजनानां कार्यत्वेन संबन्धिनः । किञ्च । सद्यः समानेऽहनि । शिश्ना शिश्नानि । शिश्नं श्नथतेरिति वचनात् ।† श्नथितृणि ताडयितृणि हिंसितृणि असुरक्षादिशत्रुवृन्दानि । प्र मिनानः प्रकर्षेण हिंसन् । नवीयान् शरीरेण बलपौरुषनयादिभिश्च नवतरो भवतीति शेषः ॥

एतौ मे गावौ प्रमरस्य युक्तौ मो षु प्र सेधीर्मुहुरिन्ममन्धि ।
आपश्चिदस्य विनशन्त्यर्थं सूरश्च मर्क उपरो बभूवान् ॥ २० ॥

कार्यकारणयोरेकत्वोपचारात्—आत्मा वै पुत्रनामासीति वचनान्मेन्द्ररूपेणावस्थितस्य । मे मम । प्रमरस्य प्रकर्षेण शत्रूणां मारयितुः स्वभूतौ न ? गावौ शत्रून्यज्ञांश्च प्रति गन्तारौ हरी । युक्तौ स्वगृहं प्रति गमनानि युक्तौ । सुष्ठु अभि पूजितौ । मो सु प्र सेधीः प्रत्युपसंहारकारणेनास्मद्यज्ञान्मापगमय । किं तर्हि । मुहुः इन्ममन्धि पुनः पुनरपीन्द्रं स्तुहि मान्तरात्मानित्यर्थः । यतः आपः चित् आप एव वृष्टिलक्षणाः । अस्येन्द्रस्य । विनशन्ति । अनेकार्थत्वाद्धातूनां नशतिरत्र प्राप्त्यर्थः । प्राप्नुवन् प्राप्नुवन्ति । अर्थं गातिं । सूरश्च सूर्यश्च प्राप्नोतीति । कीदृशः । मर्कः । मृजु शुद्धौ [मा] र्जयिता शोधयिता सर्वस्य । उपरः बभूवान् उपरतदशो भवन मेव ? शीघ्रगतिःसन्नित्यर्थः । यस्मात् गच्छन् दूरापः तस्माद्याचद्याप्नोति यद्यात्तावच्छीघ्रं पुनरपि स्तुहीत्यर्थः ॥

अयं यो वज्रः पुरुधा विवृत्तोऽवः सूर्यस्य बृहतः पुरीषात् ।
श्रव इदेना परो अन्यदस्ति तदव्यथी जरिमाणस्तरन्ति ॥ २१ ॥

योऽयमिन्द्रस्य स्वभूतः । वज्रः । पुरुधा बहुधा अनेकप्रकार-

* ऋ० १० । १२९ । २ ॥ † निरुक्त ४ । १९ ॥

मग्रतः पृष्ठतः पार्श्वतः मध्यतः अधस्तादुपरिष्टाच्च वृष्ट्युदकप्रबन्धका-सुरमेघादिशत्रुशरीरेषु । विवृत्तः पतितः अन्तरिक्षलोकस्य परस्तादादित्यमण्डले । अव इत् । अव इत्यन्ननाम ।* अन्नहेतुत्वाच्चात्रादित्यमण्डलस्थमुदकमुच्यते । इच्छब्दोऽप्यर्थे । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यदप्युदकं मेघोदरगतादुदकादन्यदस्ति तदपि । जरिमाणम् प्रहरणगवो जही विरस्येति इन्द्रस्य स्तोतारो मध्यमस्थाना देवगणा मरुदादयः तरन्ति । तरतिरत्रा[न्तर्णी]श्रीतमत्वर्थो द्रष्टव्यः । वज्रघातमन्तरेणेन्द्रस्य प्रतापेनैवान्तरिक्षलोकं प्रति रश्मिभिरवतारयन्तीत्यर्थः । अथवा जरिमाणः तमसां भीमानाञ्च रसानाञ्जरितारो रश्मयो वर्षास्ववतारयन्ति । एतदुक्तं भवति । मेघोदरगतमुदकन्तत् प्रतिबन्धकाञ्छत्रून् वज्रेण हत्वा भूमौ पातयन्तीन्द्र आदित्यमण्डलस्थमुदकं वज्रमन्तरेणाज्ञयैव केवलया अन्तरिक्षलोकं प्रति रश्मिभिरवतारयन्तीति ॥

वृक्षे वृक्षे नियता मीमयद्गौस्ततो वयः प्र पतान्पूरुषादः ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृषये च शिक्षत् ॥ २२ ॥

वृक्षे वृक्षे । अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति ।† वृक्षविकारो धनुरत्र वृक्ष इत्युच्यते । ऐश्वर्ययोगादिन्द्रस्य संग्रामकाले बहुबाहुत्वानेकधनुष्ट्वे सति वीप्सा [व]चनमुपपद्यते । वृक्षे वृक्षे वृक्षविकारे धनुषि धनुषीन्द्रस्य स्वभूते । नियता यमु [ब]न्धने । निबद्धा आरोपिता सती । मीमयत् । मीमयतिः शब्दकर्मा ।‡ शब्दं करोत्याकृष्यमाणा सता गौः । अथापि ताद्धितेन कृत्स्नवन्निगमा भवन्ति । गव्या गोविकारस्नायुमयी ज्या गमयित्री वा शराणां । ततश्च ज्यातः ततो वा शब्दकरणादनन्तरं । वयः पक्षीसदृशा गन्तारो वा इषवः । प्र पतान् प्रपतन्ति शत्रून् प्रति । कीदृशाः । पुरुषादः शत्रुपुरुषाणामत्तार मारयितार इत्यर्थः । अथ एता तस्माच्च कारणादिदं । विश्वं सर्वं । भुवनं भूतजातं । भयाते इन्द्रात् बिभेति । इन्द्राय इन्द्रार्थं । सुन्वत् सोमाभिषवं कुर्वदपि । ऋषये च शिक्षत् ऋत्विग्दृष्टा कर्मणामृत्विक् तस्मै च दक्षिणान्ददपि सोमयागं कुर्वदपि किमुतान्यदित्यर्थः ॥

---

* निघण्टु २ । ७ ॥ कतिपयेष्वेव निघण्टुकोशेषु विद्यते न सर्वेषु ।
† निरुक्तं २ । ५ ॥ ‡ निरुक्तं २ । ६ ॥

देवानां माने प्रथमा अतिष्ठन्कृन्तत्रादेषामुपरा उदायन् ।
त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम् ॥ २३ ॥

देवानां माने जगत्स्थितिहेतुभूतोदकाधारभूतत्वात् सर्वस्मात् सर्वन्तावदेव ते सृष्टा इत्यर्थः । के एते । मेघाः । कुत एतदवगम्यते । परस्मिन् पादे तेषामन्वादेशात् । भाष्ये* च मेघा एव माध्यमका देवगणा इत्युक्ताः । वृष्टानाञ्च सतामेषां मेघानां । कृन्तत्रात् इन्द्रवज्रेण विकर्तनाच्छेदनात् । उपरा उदायन् । उपरा मेघाः । तात्स्थ्यादत्र तच्छब्देनाप उच्यन्ते । मेघस्था आप उत्पन्नाः । वृष्टिभावेन भूमौ पतिता इत्यर्थः । पतितासु च तास्वप्सु इन्द्रादेशात् पर्जन्यो वायुरादित्य इत्येते त्रयः वर्षशीतोष्णैस्तपन्ति सन्तापयन्ति पाचयन्तीत्यर्थः । पृथिवीमत्र तात्स्थ्यात्ताच्छब्द्यं । पृथिवीस्था ओषधीरित्यर्थः । [ अनूपाः ] आनुपूर्व्येण वप्तारः प्रहरितारः प्रक्षेप्तार इत्यर्थः । पाचितासु चौषधीषु । द्वा द्वौ वाय्वादित्यौ । बृबूकं भूमिस्थमुदकं । वहत. आदित्यमण्डलं प्रति वाहयतः । वायुः शोषयन् आदित्यो रश्मिभिराददानः । कीदृशमुदकं । पुरीषं प्रीणयितृ पूरयितृ वा सर्वस्य वह्नित्यर्थः ॥

अथवा देवानामिति निर्द्धारणे षष्ठी । निर्माणमपि सुवृष्टेर्गृह्यते । प्रथमशब्दोऽपि प्रधानवचनः । तिष्ठतिरपि व्यापारार्थः । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव इति ।† यथा देवानां मध्ये ये प्रथमा उत्कृष्टा मध्यमा देवगणा इन्द्रस्य स्वभूता मरुदादयः । ते । माने वृष्टिनिर्माणे जनने । अतिष्ठन् व्याप्रियन्त इत्यर्थः । व्याप्रियमाणेषु तेषु कृन्तत्रादेषां । कर्तृकर्मणोः कृतिः ।‡ इत्येवमेषा कर्तरिषष्ठी एभिर्माध्यमकैः देवगणैर्यत् कृतं । कृन्तत्रं विकर्तनं मेघानां छेदनं तस्मात् हे कार्यस्मादेकैर्यैक्र्ता ? तस्मात् कारणादित्यर्थः । उपरा मेघाः । एतिरत्रान्तर्णीतण्यर्थः । किं उद्गमयन्ति जनयन्ति किं सामर्थ्याद्वृष्टिलक्षणमुदकं । जनिते च तस्मिन्नुदके त्रयस्तपन्तीः त्यादिरर्थ र्योदुक्यातार्थः ? ॥

सा ते जीवातुरुत तस्य विद्धि मा स्मैतादृगप गूहः समर्ये ।
आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते ॥२४

* निरु० २ । ५ ॥

† हितोपदेशः १ । ७२ ॥

‡ पाणि० २ । ३ । ६५ ॥

अनयर्चादित्यात्मनेन्द्र स्तूयते। सेति तच्छन्दश्रुतेरेकवाक्यतायै यच्छब्द उत्तरस्मिन्नर्धर्चे ऽध्याहार्यः । यच्छब्दसंबन्धाच्च स एव पूर्वं व्याख्येयः। यद्रश्मिरूपेण गत्वा। आविः कृणुते प्रकटीकरोति। स्वः सर्वं त्रैलोक्यमादित्य । गूहते संवृणोति च आदत्ते चेत्यर्थः। द्युसमुद्रकं भौमरसात्यं। स पादुः पदनमेतस्मै प्रयोजनद्वया[या]दित्येन] रश्मिद्वारेण गमनमित्यर्थः। अस्य निर्णिजः सर्वस्य शोधयितुरादित्यस्य स्वभूतान्नान्नेनादित्येन कदाचिदपि। मुच्यते निर्वादात् श्रमेण वा परित्यज्यते। सा ते तव मामान्तरात्मनः?। जीवातुः जीविका जीवनहेतुरित्यर्थः। यत एवमतः त्वं तस्य विद्धि तस्याप्यादित्यस्य उपकर्तुं जानीहि स्तुत्या यागेन च प्रत्युपकारं। मा च अस्मै* अस्यादित्यस्य स्वभूतं। तादृकादृशमुपकृतमपगूहः अपसंवृतमपनीतं मा कार्षीरित्यर्थः?। समर्ये मृत्युना सह संग्रामे वर्तमाने। प्राणिनां हि सर्वदैवं मृत्युना सह संग्रामः। जीवस्यैत्वान्मृत्योश्च तदपकाराय सर्वदा प्रवर्तमानत्वात् ॥

[ अष्टाविंशं सूक्तम् ]

उत्तरं सूक्तं विश्वो ह्यन्य इति द्वादशर्चमैन्द्रं वसुक्र एव ददर्श।

विश्वो ह्य१न्यो अरिराजगाम ममेदह श्वशुरो ना जगाम ।
जक्षीयाद्धाना उत सोमं पपीयात्स्वाशितः पुनरस्तं जगायात् ॥१॥

विश्वो ह्यन्यः स यज्ञं प्रति शीघ्रमानागच्छति वा यो वसुक्र इन्द्राय सोपलवं करोधयति? हे इन्द्र तुभ्यं कथयाम्यहं। विश्वः हि अन्यः अरिः आजगाम। सर्व एवान्य ईश्वरः कर्मांगदेवलक्षणः आजगाम यज्ञमागतः। कस्तर्हिं नागत। उच्यते। मम इत् अह श्वशुरः न आजगाम। ममैव वसुक्रस्य श्वशुरो वायुः नागतः। यद्यागच्छेत्। जक्षीयात् भक्षयेत्। धानाः। उत अपि। सोमं पपीयात् पिबेत्। स्वाशितः सुभोजित. पिबेत्। स्वाशित सुतृप्तः। पुनः भूयः। अस्तं

* सायणभाष्ये मोक्षमूलरमकाशिते ऋग्वेदस्य पदपाठे च भिन्नः पदपाठो विद्यते। उद्गीथस्तु मा। अस्मै। तादृक्। इतीदृशानि त्रीणि पदानि चकार। मा। स्म। एतादृक्। इति सायणसम्मतः पदच्छेदः। अस्त्यस्मत्पार्श्वे ऋग्वेदपदपाठस्य पुस्तकमेकम्। एष पदपाठः रावणकृत इति सप्तमाष्टकस्यान्ते प्रदर्शितम्। तस्मिन् पदपाठे पूर्वं उद्गीथसदृशः पदविभाग आसीत्। परन्तु पश्चात् केनचित् शोधकेन शोधयित्वा सायणानुसारी पाठः कृतः ॥

स्वगृहं । जगायात् गच्छेत् । त्वञ्च सर्वेश्वरः तस्मात्तव कथितं मयेतीन्द्रस्य स्तुतिरेव जायते ॥

स रोरुवद्वृषभस्तिग्मशृंगो वर्ष्मन्तस्थौ वरिमन्ना पृथिव्याः ।
विश्वेष्वेनं वृजनेषु पामि यो मे कुक्षी सुतसोमः पृणाति ॥ २ ॥

स यजमानः । रोरुवत् अत्यर्थं रुवत् ऋग्यजुस्सामलक्षणं कुर्वन्नित्यर्थः । किमिव । वृषभ इ[व] तिग्मशृंगः । लुप्तोपममेतत् यथा गोवृषः । तीक्ष्णशृंगः । दर्पित रुवत् अर्दन्तिघ्नन्ति* एवं । अथवा वेदार्थीयशब्दाभावादेतत्पदद्वयं यजमानविशेषणं । वृषभो वर्षिता यज्ञद्वारेणेति । तिग्मशृंगः । तिग्मं तेजतेरुत्साहकर्मणः ।† उत्साहशृंगः । संस्कृतलिंगगणैः वर्ष्मन् ‡ वर्षिणी मृदुतरे महति । कस्मिन् । सामर्थ्यायते सोमयागलक्षणे । वरिमन् वरिवणिपतरं उरुतरे वेदिस्थाने । पृथिव्याः अवयवभूते । आ तस्थौ मर्यादया तिष्ठ[ामि] मत्प्रसादात्संवत्सरे सोमयाजीदग्भवतीत्यर्थः । किञ्च । विश्वेषु सर्वेषु । संग्रामेष्वापत्सु । पामि रक्षामि । स एनं यजमानं । कीदृशं । यो यजमानः । मे ममेन्द्रस्य स्वभूतौ । कुक्षी । सुतसोमः कृतसोमाभिषवः । संपृणाति सोमेन पूरयति ॥

अद्रिणा ते मन्दिन इन्द्र तूयान्त्सुन्वन्ति सोमान्पिबसि त्वमेषाम् ।
पचन्ति ते वृषभाँ अत्सि तेषां पृक्षेण यन्मघवन्हूयमानः ॥ ३ ॥

अद्रिणाभिषवग्राव्णा । ते तवेन्द्रस्य । मंदिनः स्तुत्यस्यार्थाय । हे इन्द्र । तूयान् क्षिप्रानविलंबितान् कर्मवैगुण्यजनितेन प्रायश्चित्तेनानन्तरितान् । दशापवित्राद्धोमपात्राद्वा क्षिप्रप्रक्षारिण्योर्थेत्यर्थः । सोमान्त्सुन्वन्ति परमया भक्त्याभिषुण्वन्ति ये यजमानाः तेषामेषामस्मदादीनां स्वभूतान् सोमान् पिबसि त्वमेतरेषां । ये च यजमानाः ते त्वदर्थं । परया भक्त्या पचन्ति वृषभान् तेषां स्वभूतान् वृषभान् हविर्भूतानत्सि भक्षयसि त्वमेतरेषां । कदा पिबसि अत्सि । उच्यते । यत् यदा । हे मघवन् पृक्षेणान्नेन कर्तव्यत्वेन निमित्तभूतेन । हूयमानः भूतले आहूतो भवसि त्वं तदेत्यर्थः ॥

* रदन्तिघ्नन्ति ? † निरुक्त १० । ६ ॥ ‡ सायण-'वर्षणः' ।

इदं सु मे जरितरा चिकिद्धि प्रतीपं शापं नद्यो वहन्ति ।
लोपाशः सिंहं प्रत्यञ्चमत्साः क्रोष्टा वराहं निरतक्त कक्षात् ॥४॥

इदं सामर्थ्यं । सु शोभनमभिपूजितमतिशयवदित्यर्थः । मे मम स्वभूतं । हे जरि[तः] त्वं स्तोतः । आ चिकिद्धि मर्यादया जानीहि । कतमदिदं सामर्थ्यमुच्यते । यदि इच्छाम्यहं । प्रतीपं प्रतिकूलमित्यर्थः । शापमुदकं । नद्यो गंगाद्याः । वहन्ति । किञ्च । लोपाशः रंकुः सिंहं प्रत्यञ्चमात्मानं प्रति गतमत्साः गच्छति वधाय । क्रोष्टा शृगालश्च । वराहमतिशूरं बलवन्तं च सन्तं । निरतक्ताश्निरतक्तन्निर्गमयति बलान्निष्कालयति । कक्षात् गहनं देशात् ॥

कथा त एतदहमा चिकेतं गृत्सस्य पाकस्तवसो मनीषाम् ।
त्वं नो विद्वाँ ऋतुथा वि वोचो यमर्धं ते मघवन्क्षेम्या धूः ॥५॥

कथा कथं केन प्रकारेण । ते तवेन्द्रस्य स्वभूतमेतत्सामर्थ्यमहमा चिकेतं मर्यादया जानामि । गृत्सस्य मेधाविनः सर्वज्ञस्य । पाक अपि पक्वप्रज्ञः । तवसः तवसस्य वृद्धस्य महत इत्यर्थः । मनीषां स्तुतिञ्च कर्त्तुमिति शेषः । त्वमेव नः अस्मभ्यं विद्वान् सर्वज्ञः । ऋतुथा ऋतावृतौ यथाकालं क्रमेणेत्यर्थः । वि वोचः विविधं स्पष्टविशेषणं वा पुनरपि ब्रूहि यतः । हे मघवन् । यं ते तव स्तुत्यर्धं अवयवं कुर्मः सास्माकं । क्षेम्या क्षेमे भवा क्लेशरहिता वोढुं शक्या स्तुतिः धूः । तस्मात्तवस्तुत्यवयवमेव वयं क्लेशेन कर्तुं शक्नुमः मन्दबुद्धित्वात्तस्मात् त्वमेवास्मभ्यं स्वसामर्थ्यं स्तुतिप्रकारञ्च पुनरपि कथयेत्यर्थः ॥

एवा हि मां तवसं वर्धयन्ति दिवश्चिन्मे बृहत उत्तरा धूः ।
पुरू सहस्रा नि शिशामि साकमशत्रुं हि मा जनिता जजान ॥६॥

एवमनेनोक्तेन प्रकारेण । हि यस्मान्मामिन्द्रं । तवसं महान्तं । स्तुतिभिः स्तुवन्तः स्तोतारः वीर्येण वर्धयन्ति । तस्मात् कारणाद् दिवश्चिद् दिवोऽपि । उत्तरा अधिकापराध्यौ । मे ममेन्द्रस्य । बृहतो महतः स्तुतिः धूरन् साहधूरत पूर्वा महती स्तुतीत्साहो वा महाप्रयो वा महानित्यर्थः । किञ्च । पुरु पुरूणि च बहूनि । सहस्रा शत्रूणां सहस्राणि । नि शिशामि तनूकरोमि हिनस्मीत्यर्थः । साकं सह युगपदित्यर्थः । कस्माद्धि

यस्मादशत्रुं अविद्यमानशत्रुं । मा [मां] [इन्द्रं] । जनिता सर्वस्य जनयिता प्रजापतिः । अजान अजनितवान् ॥

एवा हि मां तवसं जज्ञुरुग्रं कर्मन्कर्मन्वृषणमिन्द्र देवाः ।
वधीं वृत्रं वज्रेण मन्दसानोऽप व्रजं महिना दाशुषे वम् ॥७॥

[हि] यस्मादेवमनेनोक्तेन प्रकारेण । मान्त्वत्पुत्रं वसुकं त्वद्रूपाणामवस्थितं सन्तं । तवसं महान्तं । जज्ञुः जानन्ति । जनयन्ति वा । उग्रं क्रूरमसह्यं वा । कर्मन् कर्मणि । अग्निहोत्रादौ वृत्रवधादौ वा । वृषणं वर्षितारं । हे इन्द्र । देवाः । हविषां दातारं । ऋत्विग्यजमानंमां मरुदादयो वा देवगणाः । अतः । अवधीं हन्मि । वृत्रमसुरं मेघं । दाशुषे हवींषि दत्तवते यजमानाय ॥

देवास आयन्परशूँरबिभ्रन्वना वृश्चन्तो अभिविड्भिरायन् ।
नि सुद्र्वं दधतो वक्षणासु यत्रा कृपीटमनु तद्दहन्ति ॥ ८

देवास आयन् देवेन्द्रेण चोदितास्सन्तो देवासः मरुतो देवाः । आयन् गच्छन्ति मेघवधाय । परशून् वज्रान् । अबिभ्रन् धारयन्ति च । मरुद्देशात् गत्वा धृत्वा च वना वनानि । लुप्तोपममेतत् पदं । यथा वृक्षान् परशुभिर्वृश्चन्तः केचित् गच्छन्त्येवं । मेघप्रेषैर्वृश्चन्तः विड्भिः ? रुद्रादि- मत्यमका देवगणाः। मनुष्यैस्सह। अभि आयन् मेघान् प्रति गच्छन्ति । नि ।सुद्र्वं सुष्ठु द्रवितृगन्तृवृष्ट्युदकन्दधतः निधारयन्तः । नियमेन स्थापयन्तः । वक्षणासु नदीषु । यत्र यस्मिन् मेघजाते । कृपीट- मुदकमनु गच्छन्ति उपलभन्ते । तन्मेघास्तन्दहन्ति भस्मीकुर्वन्ति । वज्रादिभिस्चूर्णयन्तीत्यर्थः ॥

शशः क्षुरं प्रत्यञ्चं जगाराद्रिं लोगेन व्यभेदमारात् ।
बृहन्तं चिदृहते रंधयानि वयद्वत्सो वृषभं शूशुवानः ॥९॥

शशः क्षुरं । लुप्तमत्वर्थतद्धितमेतत् पदं । क्षुरवन्तं । छेदनतीक्ष्णनखं । सिंहव्याघ्रजंदिकं ? बलवत् क्रूरदारुमृगजातं । प्रत्यंचं वधायाभिमुखमागतं प्रति जगार गिरति गृह्णाति वा । गारणाय ।

किञ्चार्द्रं पर्वतं हिमवदादिकं । लोगेन लोष्टेन मृत्पिण्डेन व्यभेदं विविधं भिनद्मि विदारयामि । आराद्दूरे प्रस्थितमित्यर्थः किञ्च । बृहन्तञ्चित् महान्तमपि हस्त्यादिकं । ऋह्वते ह्रस्व[ा]य काल पाकाय* । रंधयानि संसाधयानि वशं गमयानि । यदीच्छानि । मद्य सादाद्य वयत् गच्छति वत्सः । युद्धाय । वृषभं प्रति शूशुवान ॥

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः ।
निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधा तस्मा अयथं कर्षदेतत् ॥१०॥

सुपर्णः पक्षिराट् । इत्था अमुत्र दिवि । नखमात्मीयं । आ सिषाय आवघ्नान् आवन्धुवान् । इन्द्रार्थे सोमाहरणकाले दिवि पदं इन्द्रप्रसादा न्न्यस्तवानित्यर्थः । अवरुद्धः अवञ्जरेण वृतः परिवेष्टितः । सिंह परिपदम्न परिपदमिव । यथा पञ्जरस्य परि सर्वतः । पादमावध्नाति न्यस्यत्येवं । किञ्च । निरुद्धः चित् । चिदित्युपमार्थे । यथा पादेन श्रद्ध केनापि निरुद्धो । महिषः उदकाभावे तर्ष्यावान् भवति । एवमिन्द्र सोमाभावे तृषावानभूत् । प्राक्सोमहरणात्तृषिताय चेन्द्राय तस्मै तादर्थ्ये चतुर्थ्येषा । तृषितस्य तस्येन्द्रस्यार्थाय । गोधा गमयति वर्णा निति । गौर्वागिन्द्रियन्तत्र निहिता गोधा वाग् । गायत्र्याख्या । अग्र अयत्नेन अनायासेन लीलया । कर्षत् आकृष्टवती । दिवस्सकाशा दाकृष्टवतीत्यर्थः । एतत् सोमजातम्मधु वा सोमलक्षणं ॥

तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयंत्यन्नैः ।
सिम उक्ष्णोऽवसृष्टाँ अदन्ति स्वयं बलानि तन्वः शृणानाः ॥११॥

तेभ्यः । तेषाञ्च देवानामृषीणाञ्चार्थाय । गोधाः वाग् । गायत्र्याख्या । इन्द्रस्यार्थे दद्यात् ? अयथं कर्षदिति । व्याख्यातं ये देवा ऋषयश्च । ब्रह्मणः परिवृढः परिवृढस्य । स्वभूतैरन्नै सोमाख्यैस्तृप्ताः सन्त इति शेषः । प्रतिपीयन्ति हिंसन्तः प्रतिहिंस न्तीन्द्रेणाभ्यनुज्ञाताः । किञ्च । सिमः । सर्वान् । उक्ष्णः वृषकान् । अवसृष्टान् इन्द्रेण निसृष्टान् दत्तान् हविर्भूतान्यज्ञेषु । अदन्ति भक्षयन्ति च । स्वयमात्मनैव । शत्रूणां बलानि सेनालक्षणानि वा । तन्वः शरीराणि शृणानाः सोमे आहृते सति ॥

* अल्पाय ?

एते शमीभिः सुशमी अभूवन्ये हिन्विरे तन्व१ः सोम उक्थैः ।
नृवद्वदन्नुप नो माहि वाजान्दिवि श्रवो दधिषे नाम वीरः ॥१२॥

एते देवर्ष्यादयः । शमीभिः सोमयागकर्मभिः । सुशमी सुकर्माणः । अभूवन् भूताः । ये हिन्विरे संगमयन्ति समर्चयन्ति वा । तन्वः स्वशरीराणि । सोमे सोमयागे । उक्थैः शस्त्रैः । य. तमीदृशः । स त्वं नृवत् मनुष्यवत् । वदन् इदम्मया युष्मभ्यन्दत्त-मिति व्यक्तां वाचमुच्चारयन् । नः अस्मभ्यं । उप माहि उपगम्य देहीत्यर्थः । वाजान् अन्नानि बलानि । कस्मादेवमुच्यसे । यस्माद्दि-वि द्युलोके । श्रवः दानपतिरिन्द्र इति कीर्तिं । दधिषे धारयसि । नाम च धारयसि । वीरः दानशूरः इति ।

[ एकोनत्रिंशं सूक्तम् ]

वने न वा यो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः ।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥१॥

उत्तरं सूक्तं वने न वा य इति अष्टर्चमैन्द्रं । वसुक्र एव तद्दर्शी । वने न वा यः । चाकन् चाकन्निघातपदमेतत् । अग्निर्वरूथम्मम तस्य चाकन्[ति] यथा[।] * यच्छब्दसंबन्धाच्च तच्छब्द उत्तरे पादे । यच्छब्देनात्र सामर्थ्यात्सोमो निर्दिश्यते यस्सोमः । चाकन् इन्द्रेणात्मनः पानं कामयते । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स सोमः । वने न वा । नशब्दः संप्रत्यर्थे । वने न वा वनविकारे वृक्षावयवे पात्रे । द्रोणकल-शादने च ध्रुवस्थाल्यादौ वा । मृन्मये न्यधायि निहितः । इन्द्रार्थ-मस्माभि स्थापितः । किञ्च । शुचिः शुद्धः सर्वदोषरहितः । वां युवयो-पत्नीयजमानयोः । स्वभूत स्तोमः स्तुतिविशेषः । हे भुरणी यज्ञेन सर्वस्य जगतः भर्तारौ । स्वगन्तारौ वा । कर्मानुष्ठाने वा । अजीगः इन्द्रस्य गुणानशेषान् गृह्णाति । यस्य स्तोमस्य । इच्छब्दोऽनर्थकः । इन्द्रः पुरुदिनेषु बहुष्वहस्सु । होता । ह्वयतीत्यर्चतिकर्मा ‡ । स्तोता तादृशः । सोम इति प्रशंसितेत्यर्थः । मां प्रत्ययमागच्छतु । मागादन्यत इत्याह्वाता वा । स । इन्द्रस्य गुणानशेषान् गृह्णातीति संबन्धः कार्यः । कीदृशः । नर्यः नृभ्यो हितं नृणां मनुष्याणां । नृतमः प्रकृष्टमनुष्यश्च । क्षपावान् अति-

† पादेऽध्याहार्यः ? ‡ निघं० ३ । १४ ॥

* ऋ० १ । १४८ । २ ॥

किञ्चाद्रिं पर्वतं हिमवदादिकं । लोगेन लोष्टेन मृत्पिण्डेन । व्यभेदं विविधं भिनद्मि विदारयामि । आराद्दूरे प्रस्थितमित्यर्थः । किञ्च । बृहन्तश्चित् महान्तमपि हस्त्यादिकं । ऋह्वते ह्रस्व[ा]य काल-पाकाय* । रंधयानि संसाधयानि वशं गमयानि । यदीच्छानि । मत्प्र-सादाच्च वयत् गच्छति वत्सः । युद्धाय । वृषभं प्रति शूशुवानः ॥

सुपर्ण इत्था नखमा सिषायावरुद्धः परिपदं न सिंहः ।
निरुद्धश्चिन्महिषस्तर्ष्यावान्गोधा तस्मा अयथं कर्षदेतत् ॥१०॥

सुपर्णः पक्षिराट् । इत्था अमुत्र दिवि । नखमात्मीयं । आ सिषाय आबध्नात् आबन्धुवान् । इन्द्रार्थं सोमाहरणकाले दिवि पदं इन्द्रप्रसादा-न्न्यस्तवानित्यर्थः । अवरुद्धः अवञ्जरेण वृतः परिवेष्टितः । सिंह । परिपदश्च परिपदमिव । यथा परञ्जरस्य परि सर्वतः । पादमाबध्नाति न्यस्यत्येवं । किञ्च । निरुद्धः चित् । चिदित्युपमार्थे । यथा पादेन श्रद्धा केनापि निरुद्धो । महिषः उदकाभावे तर्ष्यावान् भवति । एवमिन्द्रः सोमाभावे तृषावानभूत् । प्राक्सोमहरणात्तृषिताय चेन्द्राय तस्मै । तादर्थ्ये चतुर्थ्येषा । तृषितस्य तस्येन्द्रस्यार्थाय । गोधा गमयति वर्णा-निति । गौर्वागिन्द्रियन्तत्र निहिता गोधा वाग् । गायत्र्याख्या । अयथं अयत्नेन अनायासेन लीलया । कर्षत् आकृष्टवती । दिवस्सकाशा-दाकृष्टवतीत्यर्थः । एतत् सोमजातमधु वा सोमलक्षणं ॥

तेभ्यो गोधा अयथं कर्षदेतद्ये ब्रह्मणः प्रतिपीयन्त्यन्नैः ।
सिम उक्ष्णोऽवसृष्टाँ अदन्ति स्वयं बलानि तन्वः शृणानाः ॥११॥

तेभ्यः । तेषाञ्च देवानामृषीणाञ्चार्थाय । गोधाः वाग् । गायत्र्यख्या । इन्द्रस्यार्थे ददात् ? अयथं कर्षदिति । व्याख्यार्थं ये देवा ऋषयश्च । ब्रह्मणः परिवृढः परिवृद्धस्य । स्वभूतैरन्नैः सोमाख्यैस्तृप्ताः सन्त इति शेषः । प्रतिपीयन्ति हिंसन्तः प्रतिहिंस-न्तीन्द्रेणाभ्यनुज्ञाताः । किञ्च । सिमः । सर्वान् । उक्ष्णः वृषकान् । अवसृष्टान् इन्द्रेण निसृष्टान् दत्तान् हविर्भूतान्यज्ञेषु । अदन्ति भक्षयन्ति च । स्वयमात्मनैव । शत्रूणां बलानि सेनालक्षणानि वा । तन्वः शरीराणि शृणानाः सोमे आहृते सति ॥

---

* अल्पाय ?

एते शमीभिः सुशमी अभूवन्ये हिन्विरे तन्व१ः सोम उक्थैः ।
नृवद्वदन्नुप नो माहि वाजान्दिवि श्रवो दधिषे नाम वीरः ॥१२॥

एते देवर्ष्यादयः । शमीभिः सोमयागकर्मभिः । सुशमी सुकर्माणः । अभूवन् भूताः । ये हिन्विरे संगमयन्ति समर्चयन्ति वा । तन्वः स्वशरीराणि । सोमे सोमयागे । उक्थैः शस्त्रैः । यः तमीदृशः । स त्वं नृवत् मनुष्यवत् । वदन् इदम्मया युष्मभ्यन्दत्तमिति व्यक्तां वाचमुच्चारयन् । नः अस्मभ्यं । उप माहि उपगम्य देहीत्यर्थः । वाजान् अन्नानि बलानि । कस्मादेवमुच्यसे । यस्माद्दिवि द्युलोके । श्रवः दानपतिरिन्द्र इति कीर्तिं । दधिषे धारयसि । नाम च धारयसि । वीरः दानशूरः इति ।

[ एकोनत्रिंशं सूक्तम् ]

वने न वा यो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः ।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान् ॥१॥

उत्तरं सूक्तं वने न वा य इति अष्टर्चमैन्द्रं । वसुक्र एव तन्ददर्श । वने न वा यः । चाकन् चाकन्निघातपदमेतत् । अग्निर्वरूथम्मम तस्य चाकन्नि[ति] यथ[ा] ।* यच्छब्दसंबन्धाच्च तच्छब्द उत्तरे पादे† । यच्छब्देनात्र सामर्थ्यात्सोमो निर्दिश्यते यस्सोमः । चाकन् इन्द्रेणात्मनः पानं कामयते । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स सोमः । वने न वा । नशब्दः संप्रत्यर्थे । वने न वा वनविकारे वृक्षावयवे पात्रे । द्रोणकलशादने च ध्रुवस्थाल्यादौ वा । मृन्मये न्यधायि निहितः । इन्द्रार्थमस्माभि स्थापितः । किञ्च । शुचिः शुद्धः सर्वदोषरहितः । वां युवयोः पत्नीयजमानयोः । स्वभूत स्तोमः स्तुतिविशेषः । हे भुरणौ यज्ञेन सर्वस्य जगतः भर्तारौ । स्वगन्तारौ वा । कर्मानुष्ठाने वा । अजीगः इन्द्रस्य गुणानशेषान् गृह्णाति । यस्य स्तोमस्य । इच्छब्दोऽनर्थकः । इन्द्रः पुरुदिनेषु बहुष्वहस्सु । होता । ह्वयतीत्यर्चतिकर्मा‡ । स्तोता तादृशः । सोम इति प्रशंसितेत्यर्थः । मां प्रत्ययमागच्छतु । मामागदन्यत इत्याह्वाता वा । स । इन्द्रस्य गुणानशेषान् गृह्णातीति संबन्धः कार्यः । कीदृशः । नर्यः । नृभ्यो हितं नृणां मनुष्याणां । नृतमः प्रकृष्टमनुष्यश्च । क्षपावान् अति-

* ऋ० १।१४८।२॥ † पादेऽध्याहार्यः ? ‡ निघं० २।१४॥

रात्रे क्रतौ यागानां स्तोतृणाञ्चांगभूतया विशिष्टया रात्र्या तन्नांश्चे-त्यर्थः । एवं शाकल्याविरोधेनायमर्थः कल्पित स्थापितः । इदानीं यास्कपदविधिनार्थं उच्यते । वृक्षे यथा वयः वेः पुत्रः पक्षी । पुत्रः कः *अनुपजातपक्षकः । न्यधायि मात्रा निहितः स्थापितः ? तावेरित्वो ?* आगच्छन्तीं । निरीक्षते तदागमनं कामयते । एवमिन्द्र । धोत्रमागच्छ-सीन्द्रागमनं याचकन् चायन् पश्यन् कामयमानो । शुचिः शुद्धः सर्व-दोषरहितः । वां युवयोः । स्वभूतं तस्तोः ? स्तामः ? हे भुरणौ । अलीगः गुणप्रहद्वारेणेन्द्रमागच्छतमेव गृह्णाति । उत्तरार्धर्चः समानार्थः पूर्वेण ॥

प्र ते अस्या उषसः प्रापरस्या नृतौ स्याम नृतमस्य नृणाम् ।
अनु त्रिशोकः शतमावहन्नन्कुत्सेन रथो यो असत्ससवान् ॥२॥

अस्या वर्तमानायाः । उषसः । अपरस्या आगा-मिन्याश्च वा उषसः । नृतौ । नृ नयने । उदयकाल इत्यर्थः । ते तव इन्द्रस्य । स्तुत्या यागेन चाराधने[न] । प्र स्याम प्रकर्षेण भवेमेत्येत-दाशास्महे वयं । *कीदृशस्य । नृणाम्मध्ये नृतमस्य प्रकृष्टमनुष्यस्य ।* कस्मात् कारणात् । स्तुत्या यागेन च । नचाराधनमाशास्महे । यस्मात्त्वामिन्द्रमाराध्य । तव प्रसादात् । स रथः । असत् । भवति । ससवान् । तव कुत्सस्य । च । सनिता संज्ञका । सह वहनद्वारेण सं सेविता । उक्तश्चायमर्थो मन्त्रान्तरे—यासि कुत्सेन सरथमवस्युरिति ।

प्रायेणायं प्रश्नः । किञ्च । कत् वाहः अर्वाङ् । कदिति कदानुशब्दपर्यायः । वाह इत्येतेन पुंसकवाचिना शब्देनेन्द्रं प्रत्यूह्यत इति सोम उच्यते । अर्वागिति तद्विशेषणं । कदा । सोमः त्वत् प्रसादात्[त्व] फलदानाय स्वस्मुखो भविष्यतीति शेषः । किञ्च कदा वा । तव प्रसादात् । उप मा मनीषा उपगमिष्यदितां । सर्वार्थदर्शनीप्रज्ञा स्तुतिर्वा सर्वगुणग्राहिणी । किञ्च । आ त्वा आङुपसर्गश्रुतेस्तद्योग्यक्रियापदोऽध्याहार्यः । कदा वा आराध्य त्वां । शकयां । शकिरत्रगत्यर्थः । अन्तर्णीतण्यर्थः । गमयेयं । उपमं वदन्ति किं राधः धनमन्नैः ॥

कदु द्युम्नमिन्द्र त्वावतो नॄन्कया धिया करसे कन्न आगन् ।
मित्रो न सत्य उरुगाय भृत्या अन्ने समस्य* यदसन्मनीषाः ॥४॥

कत् उ कदा वा । द्युम्नमन्नं हविर्लक्षणमस्मदीयं मय्येति शेषः । हे इन्द्र त्वावतः त्वत्सदृशान् मनुष्यान् तस्मात् । कया धिया कया अनुग्रहबुद्ध्या । करसे करिष्यसि । कत् कदा वा । नः अस्मान् प्रति । आगन् आगमिष्यसि [त्व]मित्यर्थः । हे उरुगाय बहुगते बहूनां दत्तानां गतिभूतेत्यर्थः । विस्तीर्णगते वा । सर्वगतीनां मध्ये महागते वेत्यर्थः । किमिव । किमर्थञ्च । उच्यते । मित्रः न सत्यः । भृत्यैः यथा कश्चित्स्निग्धः अविसंवादी भरणाय योगक्षेमवहनाय आपद्यागच्छेत् परया प्रीत्या एवं । कस्मादेवमुच्यसे । कदा मां प्रत्यागमिष्यसि भरणायेति । यत् यस्मात् । अन्ने आहारे शरीरस्थितिनिमित्ते । सर्वस्य* सर्वस्यास्मदादिकस्य प्राणिनः । असन् भवन्ति । मनीषाः प्रज्ञा अन्नाभिलक्षणाः ॥

प्रेरय सूरो अर्थं न पारं ये अस्य कामं जनिधा इव ग्मन् ।
गिरश्च ये ते तुविजात पूर्वीर्नर इंद्र प्रतिशिक्षंत्यन्नैः ॥ ५ ॥

यच्छन्दसंबन्धाद् द्वितीये पादे आरंभे । ये यजमाना अस्मदादयः । अस्य तवेन्द्रस्य कामं सोमपानेच्छां ग्मन् । गमिरत्र शुद्धोपि[वि]पूर्वो द्रष्टव्यः । अन्तर्णीतण्यर्थवद्द्रष्टव्यः । विगमयन्ति प्रभूतसोमप्रदानेनापनयन्ति । किमिव । जनिधा इव । जनीनाञ्जायानां संभोगकाले शय्यासु धारयितारः पतयो यथा

* समस्य—ऋग्वेदपाठः ।

प्रभूतसंभोगप्रदानेन मैथुनेच्छामपनयन्ति एवं । गिरश्च स्तुतीः । पूर्वीः अनादिकालप्रवृत्ताः । पुरोडाशोद्यतेर्न्न सह । ये नरो मनुष्याः अस्मदादयो यजमानाः । ते तुभ्यमिन्द्राय । प्रतिशिक्षन्ति प्रतिकालन्ददति । तान् सर्वानस्मदादीन्यजमानान् । हे इन्द्र । तुविजात् बहुभूत । रूपं रूपं प्रतिरूपो बभूवेति वचनात् सर्वात्मकत्वं । प्रेरय प्रगमय । संसारस्यान्तं प्रगमयन्तामिव । सूरः अर्थ न यथा सूर्यः अर्थमर्त्तारं संसारस्यान्तं गन्तारं योगिनमनुगृह्णन् । अपवर्गं गमयत्येव । दृष्टान्तगतोयमर्थः । उत्तर एव उपनिषत्—सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः पुरुषो ह्यव्ययात्मा ।*—इत्येवमाद्यासु ।

मात्रे नु ते सुमिते इन्द्र पूर्वी द्यौर्मज्मना पृथिवी काव्येन ।
वराय ते घृतवन्तः सुतासः स्वाद्मन्भवन्तु पीतये मधूनि ॥६॥

मात्रे सर्वस्य निर्मात्र्यौ द्यावापृथिव्यौ । पूर्वी अनादिकालप्रवृत्ते । हे इन्द्र । ते तव । स्वभूतौ । नु क्षिप्रं सुमिते सुनिर्मिते । केन मम स्वभूतौ क्षिप्रं सुमिते । उच्यते । द्यौः मज्मना बलेन । पृथिवी काव्येन कविकर्मणा । मेधाविचेष्टितेन प्रज्ञयेत्यर्थः । यस्मादीदृशेन महत्वेन युक्तः । त्वं तस्मात् । पराय श्रेष्ठाय । ते तुभ्यमिन्द्राय । घृतवन्तः अग्निमुखत्वां प्रति क्षरणवन्तो दीप्तिमन्तो वा । संस्कृतत्वादाज्यसंयुक्ता वा । सुतासः अभिषुताः सोमात् । स्वात्मन्† स्वशब्द आत्मवचनः । आत्मेत्यन्ननाम । देवानां । स्वा स्वमन्नं हविर्भागलक्षणं यस्मिन् स्वस्वाद्धो ? यज्ञः । तस्मिन् स्वादुनि यज्ञे । अथवा । स्वादुशब्दस्य उकारलोपो द्रष्टव्यः । स्वादुनि मृष्टान्ने । यज्ञे अस्मदीये । भवन्तमस्माभिर्दत्तानि । किमर्थं । पीतये पानाय । मधूनि मधुररसान्यन्नानि अपि हवींषि । अदना दत्तानि भवन्तः ।

आ मध्वो अस्मा असिचन्नमत्रमिंद्राय पूर्णं स हि सत्यराधाः ।
स वावृधे वरिमन्ना पृथिव्या अभि क्रत्वा नर्यः पौंस्यैश्च ॥७॥

आ अस्मै इन्द्राय । अस्येन्द्रस्यार्थे । आ असिचन् आभिमुख्येन स्थित्वा परया भक्त्या सिक्तवन्तः । अग्नौ प्रक्षिपन्त ऋत्विजः

---

* मुण्डक उप० १ । ११ ॥  † स्वाद्मन् ?

मघ्वः मधुरस्य सोमस्य पूर्णममत्रं प्रहचमसादिकं । अस्मात् सिक्तवन्त । यस्मात् । स इन्द्रः । सत्यराधाः सत्यधनः । यजमानेभ्यो दातव्यत्वेनाविसंवादिधन इत्यर्थः । तेन च पात्रेणाग्नौ सिक्तेन तृप्तस्सन् स इन्द्रः । नर्यो नृभ्यो हितः । ववृधे वृद्धवान् । वरिमन् वरिम्णा । शरीरस्योरुत्वेन । अमर्यादया प्रमाणेनेत्यर्थः । कस्य । पृथिव्याः । अभिवृद्धत्वात् । क्रत्वा कर्मणा च रसानुप्रदेन वृत्रवधादिकेन । प्रज्ञया वा । पौंस्यैश्च बलैश्चेत्यर्थः ॥

व्यानळिन्द्रः पृतनाः स्वोजा आस्मै यतन्ते सख्याय पूर्वीः ।
आ स्मा रथं न पृतनासु तिष्ठ यं भद्रया सुमत्या चोदयासे ॥८॥

सर्वप्रकरया वृद्धया वृद्धश्च सन्निन्द्रः स्वोजा सुबलः । आनट् व्याप्नोति । पृतनाः संग्रामान् । अप्रतिहन्यमानः संग्रामेषु शत्रुं जयतीत्यर्थः । किञ्च पूर्वीः । पूर्वशब्दोत्र उत्कृष्टवाची । पूर्वा उत्कृष्टा शत्रुसेना । अप्रभवन्त्यः । अस्यैन्द्रस्य । सख्याय सखिभावाय सखित्वलक्षणाय । अयतन्ते सन्धिं कर्तुमिच्छन्तीत्यर्थः । उत्तरोर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यं । स्मेति पदपूरणः । न शब्दः परस्तात् प्रयुक्तोपि पृतनाशब्दस्य सामर्थ्यादुपमार्थीयः । अस्मद्वशं प्रत्यागन्तुं तं स्वरथमातिष्ठ महतादरेण । क्व पृतनासु । न यथा संग्रामे महतादरेण । रथमातिष्ठस्येवं यं रथं । भद्रया कल्याण्या । सुमत्या शोभनया प्रज्ञया परानुग्रहबुद्ध्या । चोदयासे प्रेरयसि । यज्ञान् प्रति ॥

[ त्रिंशत्तमं सूक्तम् ]

उत्तरं सूक्तं प्र देवत्रेति पञ्चदशर्चमब्देवत्यमैलूषः कवषो ददर्श ।

प्र देवत्रा ब्रह्मणे गातुरेत्वपो अच्छा मनसो न प्रयुक्ति ।
महीं मित्रस्य वरुणस्य धासिं पृथुज्रयसे रीरधा सुवृक्तिः ॥१॥

प्र उपसर्ग एतिना संबध्यते । देवत्रेति अविशेषं । ब्रह्मण इति तृतीयार्थे चतुर्थी । गातुरिति सोम उच्यते । गुणवृत्त्या स्तुतिलक्षणेन स्तूयमान इति शेषः । गातुः देवानपो वा प्रतिगमनशीलः सोम प्रगच्छतु । देवत्रा देवीरपः वसती । वर्येकधनलक्षणाः । अच्छाभि आप्तुं । कस्येव वेगेनागच्छतु । मनसो मनस इव ।

प्रयुक्ति प्रयुक्त्या प्रयोगेण वेगेनेत्यर्थः । अपः प्रतिगते च सोमे त्वमपि हे मदीयकर्मात्मन् । अध्वर्यवो वा । महीन्यासि महदन्नं सोमलक्षणं । मित्रस्य वरुणस्य चार्थाय । पृथुजयसे विस्तीर्णजवाय । महागतेरिन्द्रस्य चार्थायेत्यर्थः । रीरध संसाधय संस्कुरु । दानयोग्यं कुरु । सुवृक्तिं सुष्ठु दोषैर्विवर्जितां स्तुतिं च ॥

अध्वर्यवो हविष्मन्तो हि भूताच्छाप इतोशतीरुशंतः ।

अव याश्चष्टे अरुणः सुपर्णस्तमास्यध्वमूर्मिमद्या सुहस्ताः ॥२॥

हीति पदपूरणः । हे अध्वर्यवः हविष्मन्तः अभिप्रेतत्वेन सोमलक्षणेन हविषा तद्वन्तः । यूयं भूतं भवत । सोममभिषुणेत्यर्थः तदर्थश्च । अगच्छ । आप्तं गृहीतं । अपः सोमाभिषवांगभूताः । एकधनलक्षणाः । इत गच्छत । उशतीः सोमाभिषवांगभूताप कामयमानाः । उशन्तः सोमाभिषवं कर्तुं कामयमानाः । या अवः । आप्तुं गच्छतेति संबन्धः कार्यः । अभिरसहाभिषुतश्च सन्तन्तम्मूर्मि । सोमसंघातं । शोभनकर्मकारित्वाद्वा सुवर्णनालंकृत्वाद्वा । शोभना हस्ता येषां ते सुहस्ता अध्वर्यवः । तेषामिदं संबोधनं ॥

अध्वर्यवो ऽप इता समुद्रमपां नपातं हविषा यजध्वम् ।

स वो ददर्मिमद्या सुपूतं तस्मै सोमं मधुमन्तं सुनोत ॥ ३ ॥

हे अध्वर्यवः । अप एकधनलक्षणाः । आहर्तुमिति शेषः । इत गच्छत यूयं । समुद्रं समुद्रस्थानीयं । अक्षीणोदकजलाशयं । इदानीमुत्तरोर्धो व्याख्यायते । पश्चाद् द्वितीयः पादो व्याख्येयः । अयोयं क्रमः जलाशयं प्रतिगतेभ्यश्च । व युष्माकं । यस्यार्थाय सोमः पूयते । सोपानपाद् । ददत् ददातु । ऊर्मिमप्समूहम् । अद्य संप्रति । सुपूतं सुशुद्धं । तेन चाप्स समूहेन सह । तस्मै तदर्थमपो न पूतमित्यर्थः । सोमम्मधुमन्तं । मधुस्वादोपेतः सुनोता भिषुणुत । यूयमाभिषुत्य च तेन सोमाख्येन हविषा । अप्सुहितेनापान्नपातं । मध्यमं वृष्टिकर्मण्यधिकृतं । देवं यजध्वं । यूयं हे अध्वर्यवः ॥

यो अनिध्मो दीदयदप्स्व१ न्तर्यं विप्रास ईलते अध्वरेषु ।

अपां नपान्मधुमतीरपो दा याभिरिंद्रो वावृधे वीर्याय ॥ ४ ॥

उत्तरार्धस्य प्रत्यक्षकृतत्वात् एकवाक्यतायै युष्मच्छब्देन समानार्थो भवच्छब्दः प्रथमेऽर्धर्चेऽध्याहार्यः। यो भवान्। अपान्नपात्। अनिध्मः अनिन्धनः। ददीयत् दीप्यते। अप्सु अन्तः मेघस्थानामपामन्तः। यं भवन्तमपान्नपातं। विप्रासः मेधाविनः ऋत्विग्यजमानाः। ईलते स्तुवन्ति। अध्वरेषु यज्ञेषु। स त्वं। हे अपान्नपात्। याभिरद्भिः। वसतीवर्येकधनारूपाभिः। सोमेन मिश्रिताभिः। इन्द्रो वावृधे वर्धते। वीर्याय वीरकर्मणे। यत्र वधादिकार्यं कर्तुमित्यर्थः॥

याभिः सोमो मोदते हर्षते च कल्याणीभिर्युवतिभिर्न मर्यः।
ता अध्वर्यो अपो अच्छा परेहि यदासिंचा ओषधीभिः पुनीतात्॥५॥

चतुर्थः पादः पूर्वं व्याख्येयः। पश्चाद्यथाक्रमं त्रयः पादा व्याख्येयाः। यदा आसिञ्चाः। मर्यादया सिञ्चसि। अधिषवणचर्मसास्य सोमस्याभिषूयमाणस्योपरिप्राक्षिपस्य। यः यदा च? ओषधीभिः। पुनीतात्। ओषधीरत्र सोम उच्यते। बहुवचनञ्चावयवापेक्षं। यदा। च। सोमेन सह। दशापवित्रे। सुनास्यवः कदा याभिरद्भिः वसतीवर्येकधनारूपाभिस्सह। सोमः। मोदते हृष्यति हर्षते च। पुनरुक्तपरिजिहीर्षया। अन्तर्णीत भृशार्थोत्र हृष्यति द्रष्टव्यः। अत्यर्थं हृष्यति च। किमिव कल्याणीभिः युवतिभिर्न मर्यः। यथाकमनीयाभिः यौवनान्विताभि स्त्रीभिस्सह मनुष्यः किञ्चिदत्यर्थं मोदते। एवन्ता आपः। आच्छ। आप्तुं आहर्तुं। परा इहि जलाशयं गच्छ त्वं हे अध्वर्यो॥

एवेद्यूने युवतयो नमंत यदीमुशन्नुशतीरेत्यच्छ।
सं जानते मनसा संचिकित्रेऽध्वर्यवो धिषणापश्च देवीः॥६॥

एवशब्दः नमन्तशब्दात् परो द्रष्टव्य.। इच्छब्दोऽत्र पदपूरणः। यूने अभिषवादिकर्मणामात्मना सह मिश्रयित्रे कर्त्रेऽध्वर्यवे। युवतयः सोमेन सह आत्मनो मिश्रयित्र्यः। यौवनान्विता वा। आपः वसतीवर्येकधना लक्षणानामन्त एवं प्रह्वीभवन्त्येव उपनमन्त्येवेत्यर्थः। कदा। उच्यते। ईमेना आपः। उशन् सोममभिषवादिकर्मकर्तुं कामयमानोऽध्वर्युः उशतीः। सोमेन सह मिश्रीभावमभिषवादिकर्माङ्गभावञ्च कामयमानः। आच्छ। आप्तुं आहर्तुमेति गच्छति। कदा। कस्मात्-

कारणाद्पनमन्ते । यस्मात् सञ्जानते सम्यग् जानन्ति । मनसा. विशिष्टया प्रज्ञया । सञ्चिकित्रे सम्यक् पदयन्ति च । विशिष्टेन चक्षुषा । स्वं स्वमधिकारं परस्परोपकारञ्च । अप्स्वेव धिषणा वाक् । स्तुतिलक्षणा। आपश्च देवी देव्य ॥

यो वो वृताभ्यो अकृणोदु लोकं यो वो मह्या अभिशस्तेरमुंचत् ।
तस्मा इंद्राय मधुमंतमूर्मिं देवमादनं प्र हिणोतनापः ॥ ७ ॥

य इन्द्र. वः युष्मभ्यमद्भ्यः । वृताभ्यः मेघेनावृताभ्यः वेष्टिताभ्यः । तादर्थे चतुर्थ्येषा । युष्माकमपाम्मेघेन वेष्टितानामर्थायेत्यर्थः । आकृणोत् कृणवान् । उ इति पदपूरणः । लोकं स्थ नं । मेघादयश्च वः युष्मान्मह्या महत्या । अभिशस्तेः मेघवेष्टनाभिः हिंसातः । अमुञ्चत् माचितवान् । तस्मै इन्द्राय । मधुमन्तं मधुरस्वादुयुक्तं । ऊर्मिमप्संघातं । देवमादनं मित्रादिदेवानां सह मिश्रीभूयतर्पयितारं । प्रहिणोतन प्रगमयतास्मद्यज्ञं प्रत्यंगभावाय प्रस्थापयत यूयं हे आपः ।

प्रास्मै हिनोत मधुमन्तमूर्मिं गर्भो यो वः सिंधवो मध्व उत्सः ।
घृतपृष्ठमीड्यमध्वरेष्वापो रेवतीः शृणुता हवं मे ॥ ८ ॥

प्रास्मे हिनोतदछन्द संबन्धा द्वितीये पादे ? गर्भसारः यवः । युष्माकं स्वभूतः । हे सिन्धवः स्यन्दनशीलाः । मध्वः मधुनः मृष्टरसस्य । उत्सः उत्स्यन्दिनः उत्सिपिता । यच्छब्दंसंबन्धात् गर्भं ? मधुमन्तं मधुस्वादोपेतं । ऊर्मिमप्संघातं । घृतपृष्ठं घृतेनाज्येन पृष्ठमीड्यं स्तुत्यमध्वरेषु यज्ञेषु । ईदृशं सारं युष्मत् संबन्धिनमस्मै अस्येन्द्रस्यार्थाय । प्रहिणोत प्रगमयत । प्रस्थापयतास्मद्यज्ञं प्रत्यंगभावाय । हे आपः । अस्मभ्यं युष्माभि । दातव्र ? दृष्टादृष्टफललक्षणेन । तद्धव्यं शृणुत हवमाह्वानं वचनमेतदित्यर्थः । मे मम स्वभूतं ॥

तं सिंधवो मत्सरमिन्द्र पानमूर्मिं प्र हेत य उभे इयर्ति ।
मदच्युतमौशानं नभोजां परि त्रितंतुं विचरंतमुत्सम् ॥ ९ ॥

हे सिन्धवः स्यन्दनशीला आपः । य उभे दृष्टादृष्टफले । अस्मभ्यन्दातुमियर्ति गच्छति । कर्मांगभावं प्रतिपद्यते । तम्मत्सरं मन्दयितारमिन्द्रादिदेवानान्तर्पयितारमिन्द्रस्य । पानवाधान्येनेन्द्रेण

वा । तत्य प्य ? स्य ? ऊर्मिमुदकसंघातं । प्र हेत प्रगमयत प्रेषयतास्मदभिमुखं प्रत्यगभावाय । मदच्युत मदस्य च्योतयितारमुत्पादयितारमित्यर्थः । औशानं सोमेन सह मिश्रीभवतु ? कामयमानं । नभोजां नभसि आकाशे अन्तरिक्षे वृष्टिरूपेण जातं । परि सर्वतः त्रितन्तुं त्रयाणां सवनानान्तनितारं विस्तारयितारं । विचरन्तं विविधं यज्ञपात्रेषु गच्छन्तमुत्समुत्स्यन्दनमुत्सर्पितारन्देवान् प्रत्यूर्ध्वं गन्तारमित्यर्थः ॥

आववृंततीरध नु द्विधारा गोषुयुधो न नियवं चरंतीः ।
ऋषे जनित्रीर्भुवनस्य पत्नीरपो वंदस्व सवृधः सयोनीः ॥ १० ॥

अववृततीः आवर्ताः अस्मदभिमुखीभूताः । अध अथानन्तरं क्षिप्रं । द्विधाराः द्विशब्दोत्र अनेकत्वमाप्रवचनः । अनेकधाराः इत्यर्थः । किमिव । गोषुयुधो न गोषु वृष्टिलक्षणासु अप्सु निमित्तभूतासु । मेघेन सह युध्यत इति । गोषु यदिन्द्रः । तस्य । यथा वृष्टिलक्षणा आप अपर्यन्तधाराः । यवक्षियवक्षिश्रयेन । मिश्रयणीयं सोमं प्रति । चरन्तीः गच्छन्तीः । अथवा नियवशब्देन यवलूनपादं उच्यते । लुतोपमश्चैतत् पदं । चरतिरपि भक्षणार्थः । यथा यवलूलगाश्चरन्तीः घन्दते कश्चिदेवं । यवलूनपादं स्थानीयं सोमञ्चरन्तीः हेतुभावेन सञ्चूर्णयन्तीः । एकधाना अपः वन्दस्व प्रणम्य स्तुहि वा त्वं । हे ऋषे कर्मणान्द्रष्ट यजमान । कीदृशीरप उच्यते । जनित्रीः जनयित्रीः । कस्य । भुवनस्य सर्वस्य लोकस्य । पालयित्रीश्च । सवृधः सह सोमस्य वर्द्धयितुः । सयोनीः सोमेन सह समानस्थानाः ॥

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम् ।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः ॥११॥

हिनोत समाप्तिं गमयत वर्धयत वा । नः अस्माकमध्वरं यज्ञं । देवयज्या देवयज्यायै देवयागार्थमित्यर्थः । हिनोत गमयत च । परिसमाप्तिं वर्धयत च वा । ब्रह्म स्तुत्याख्यं । सनये लाभाय धनानाम् । दृष्टादृष्टफलप्राप्त्यर्थमित्यर्थः । ऋतस्य यज्ञस्य । योगे सम्बन्धे वर्तते यदिदमूध स्थानीयमधिषवणचर्म । तदेव प्रतिविष्यध्वं विमुञ्चतात्मानं । सोमरसेन सह मिश्रीभूतेन रसेन । पूरयतैतदित्यर्थः ।

अथवा अनडुद्भ्यां युज्यत इति योगो हविर्धानशकटं। सामीपिकश्चेदमधिकरणं गंगायां गावश्चरन्तीति यथा। यज्ञस्य सर्वस्य हविर्धानशकटे सामीपिकाधिकरणभूते। यदिदमूधस्थानीयमधिषवणचर्म तदेतत् प्रतिविमुञ्चतात्मानमित्यादिपूर्ववद्योज्यं। एतच्च कुर्वत्यः। श्रुष्टीवरीः सुखवत्यः सुखकर्यः। भूतन भवत। यूयमस्मभ्यं।

आपो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च।
रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयो धात्॥१२॥

हे आपः रेवती धनवत्यः। क्षयथा ईशिध्वं। वस्वः वसुनः धनस्य। क्रतुश्च कर्म च। भद्रं कल्याणं सोमयागलक्षणं। बिभृथ धारयथ पुष्णीथ वा। अमृतत्वामरणधर्माणः। इन्द्रादिदेवश्च। रायः धनस्य चास्मदीयस्य। कीदृशस्य। स्वपत्यस्य शोभनपुत्रस्य। सहितस्य पत्नीः पालयित्र्यः। स्थ भवथ। यूयन्तस्मात् कारणात्। सरस्वती या। का। स्तुतिलक्षणा। तत् वयः तदन्नमुत्कृष्टन्तत् धात् दधातु। गृणते स्तुवते मह्यं।

प्रति यदापो अदृश्रमायतीर्घृतं पयांसि बिभ्रतीर्मधूनि।
अध्वर्युभिर्मनसा संविदाना इंद्राय सोमं सुषुतं भरंतीः॥ १३॥

हे आप। यत्। सुपां सुलुगिति द्वितीयाबहुवचनस्यात्र लुक्। युष्मान् प्रति अद[र्शं] अभिमुखन्दृष्टवानस्म्यहमायतीः अस्मद्यज्ञं प्रत्यागच्छन्तीरंगभावाय। घृतमाज्यं होमसृष्टं। पयांसि उदकानि। स्वावयवभूतानि। मधुसदृशानि मृष्टरसानि। बिभ्रतीः धारयन्तीः। अध्वर्युभिः सह। मनसा अन्तःकरणेन। संविदानाः संभाषमाणाः। इन्द्राय इन्द्रार्थे सोमं सुषुतं सुष्ठुतं। भरन्तीः हरन्तीः। हेतुकर्तृत्वेनास्मद्यज्ञं प्रतिपादयन्तीः ताः युष्मान् स्तौमि प्रणमामि चेति शेषः।

एमा अग्मन्रेवतीर्जीवधन्या अध्वर्यवः सादयता सखायः।
नि बर्हिषि धत्तन सोम्यासोऽपां नप्त्रा संविदानास एनाः॥१४॥

वसतीवर्यैकधनारूपाः आपः। रेवतीः धनवत्यः। जीवधन्या जीवनस्य जीवानां वा वर्धयित्र्यः प्रीणयित्र्यो वा। आ अग्मन् आगता अस्मद्यज्ञं प्रति अंगभावाय एतज्ज्ञात्वा। हे अध्वर्यवः। सादयत

स्थापयत । हे सखायः समानाख्याना वा । तुल्यकर्मविषयविज्ञाना वेत्यर्थः । क्व सादयाम । उच्यते । बर्हिषि वेदिस्तरणे । निधत्तन नियमेन धारयत स्थापयत । हे सोम्यासः सोमसंपादिनः । अपाम्नप्त्रा देवेन वृष्ट्यधिकारिणा सह । संविदानासः संमन्त्रयमाणाः । नो । आपः ।

आग्मन्नाप उशतीर्बर्हिरेदं न्यध्वरे असदन्देवयन्तीः ।
अध्वर्यवः सुनुतेन्द्राय सोममभूदु वः सुशका देवयज्या ॥१५॥

अगमन्नागतवत्यः । आपः वसतीवर्येकधनाख्याः । उशतीः कामयमानाः । किं । बर्हिरिदं वेदिस्तरणमागत्य याध्वरे यज्ञे । आ नि असदन् मर्यादया निषण्णा उपविष्टाः । देवयन्तीः देवान् कामयमानाः । तर्पयितुमिच्छन्त्य इत्यर्थः । एतज्ज्ञात्वा । हे अध्वर्यवः सुनुत अभिषुणुत । इन्द्रायेन्द्रार्थं । सोममिदानीमपां प्रसादात् । अभूत् भूता संवृत्ता वा । युष्माकं सुशका सुष्ठु शकनीया अयत्नसाध्या । देवयज्या सोमेनेन्द्रादिदेवयाग इत्यर्थः ।

[ एकत्रिंशत्तमं सूक्तम् ]

उत्तरं सूक्तं आ नो देवानामित्येकादशर्चं वैश्वदेवमैलूषः कवषो ददर्श ।

आ नो देवानामुप वेतु शंसो विश्वेभिस्तुरैरवसे यजत्रः ।
तेभिर्वयं सुषखायो भवेम तरंतो विश्वा दुरिता स्याम ॥१॥

नः उपवेतु अस्मानुपगच्छतु । संप्राप्नोतु कन्देवानां विश्वेषां संबन्धि । शंसः शंस इति कान्तिकर्मा शसः । कान्तिरिच्छा अभिप्रायः । अनुग्रहबुद्धिरित्यर्थः । कथमागच्छतु । विश्वेभिस्तुरैः सर्वैः त्वरणैः । शीघ्रमित्यर्थः । किमर्थमागच्छतु । अवसे अस्माकं रक्षणार्थं । कीदृशः । शंसः । यजत्रः यष्टव्यः पूजयितव्यः । किञ्च । तेभिः तैर्देवैः । सखिभिर्वयं । सुषखायः शोभनसखायः । भवेमेत्याशास्महे । तत् प्रसादाच्च । तरन्तः अभिगच्छन्तः । विश्वा सर्वा दुरिता पापानि स्यामेत्येतदाशास्महे वयं ।

परि चिन्मर्तो द्रविणं ममन्यादृतस्य पथा नमसा विवासेत् ।
उत् स्वेन क्रतुना सं वदेत श्रेयांसं दक्षं मनसा जगृभ्यात् ॥ २ ॥

विश्वेषान्देवानां यागार्थं । परिचित् अप्रतिनिषिद्धात्सर्वतः । मर्त्तः मनुष्याधिकृतः । द्रविणन्धनममन्यात् । मन्यति कान्तिकर्मा । कामयेत लब्धुमिच्छेत् । लब्ध्वा च धनमृतस्य यज्ञस्य । पथा यथोक्तेन मार्गेण । विधिना । नमसा हविरन्नेन । आविवासेत् परिचरेत । परिचरणकाले च । उत् अपि । स्वेन क्रतुना आत्मीयेन विज्ञानेन । मनसेत्यर्थः । संवदेत संवादोऽत्र सामर्थ्यात् ध्यानमुच्यते । हविर्गृहीत्वा वषट् करिष्यन् विश्वान् देवान् मनसा ध्यायेदित्यर्थः । विश्वेदेवा यागानन्तरञ्च । तत् प्रसादाच्छ्रेयांसं । पश्यसि । अंतरन्दक्षं वृद्धं सर्वव्यापिनं । मनसा ध्यानसाधनेन । अन्तःकरणेन । जगृभ्यात् अत्यर्थं गृह्णीयाद्ध्यायेच्चलितञ्च वत ? चिन्तयात्मन्येव समाद्ध्यादित्यर्थः ।

अधायि धीतिरससृग्रमंशास्तीर्थे न दस्ममुप यंत्यूमाः ।
अभ्यानश्म सुवितस्य शूषं नवेदसो अमृतानामभूम ॥ ३ ॥

अधायि निहिता स्थापिता प्रवर्त्तितास्माभिः । धीति देवया । इदानीं अससृग्रं असमानसृष्टं । उत्कृष्टजन्मानमित्यर्थः । किं । विश्वेदेवसंघ । अंशाः हविर्भागाः । तदर्थेन तीर्थदेशेन दस्मं शत्रूणामुपक्षपयितारं दर्शनीयं वा । उपयन्ती लोडर्थेत्र लट् लोड्वा । उपयन्तु उपगच्छन्तु । स्वीभवन्त ? ऊमाः अवितारः तर्पयितारः । तृप्ते च सति सर्वदेवगणे तत् प्रसादाद्वयं अभ्यानश्म व्याप्नुयाम प्राप्नुयामेत्याशास्महे । सुवितस्य सु इत्यस्य सुगतस्य स्वर्गादिकस्य । सूतस्य वा । प्रजाया संबन्धि शूषं बलं । सुखलक्षणं स्वर्गसुखमपत्यसुखं वेत्यर्थः । किं । नवेदसो अमृतानामभूम न नवेत्येतस्मिन्नर्थे । नवेदशब्दं वैयाकरणा निपातयन्ति । नभ्राणनपान्नवेदानासत्येति । न न वेत्तारो वेत्तर एव स्वरूपतो ज्ञातार एव । वयं । अमृतानामभूम भवेमेत्येतदाशास्महे ।

नित्यश्चाकन्यात्स्वपतिर्दमूना यस्मा उ देवः सविता जजान ।
भगो वा गोभिरर्यमेमनज्यात्सो अस्मै चारुश्छदयदुत स्यात् ॥४॥

नित्यः कल्पावस्थायी प्रजापतिः । चकन्यात् कामयतां । किं । सामर्थ्याद् दृष्टादृष्टफलं तस्मै दातुं । स्वपतिः स्वसां प्रजानां स्वामी ।

दमूनाः दममना वा दान्तमना वा* । कस्मै । यस्मै यजमानाय मह्यं । देवः सविता । जजान जनितवान् । दृष्टादृष्टफलं च दातुँश्छदयन् कामयतामित्येतदाशास्महे वयम् ॥

इयं सा भूया उषसामिव क्षा यद्ध क्षुमंतः शवसा समायन् ।
अस्य स्तुतिं जरितुर्भिक्षमाणा आ नः शग्मास उप यन्तु वाजाः ॥५॥

यत् । सुपां सुलुगिति द्वितीयैकवचनस्य लुक् । हेति पदपूरणः । यां स्तुतिं यागक्रियां वा । प्रति क्षुमन्तः । क्षु शब्देनान्नमुच्यते । शब्दे वा । हविरन्नेनान्नवन्तः शब्दवन्तो वा । स्तुतिमन्तः कीर्तिमन्तो वेत्यर्थः । के । देवाः सर्वे । शवसा सर्वेण बलेन । समायन् समागताः संप्राप्ताः । सेयमस्मदीया स्तुतिः यागक्रिया वा भूयाः । पुरुषव्यत्ययः कार्यः । भूयाः भवतु । किं । सामर्थ्याद् देवानां व्याप्त्या । किमिव । उषसामिव क्षाः यथोषं द्यावापृथिवी । एवं देवप्रसादात् सगुणा भवतु । सगुणत्वाच्च देवाः परया प्रीत्या अंगभावमुपगच्छन्त्वित्यचत्यर्थः ॥

अस्येदेषा सुमतिः पप्रथानाभवत्पूर्व्या भूमना गौः ।
अस्य सनीळा असुरस्य योनौ समान आ भरणे बिभ्रमाणाः ॥६॥

अस्य इत् । इच्छब्दोऽत्र उपमार्थे पूर्वशब्दाच्च परो द्रष्टव्यः । अस्य यजमानस्य । स्वभूता एषा सुमतिः सुस्तुतिः । पप्रथाना विस्तार्यमाणा । अस्माभिः क्रियमाणा इत्यर्थः । अभवत् भूता संवृत्ता । पूर्व्या इत् पूर्वकालीनेव । पूर्वस्मिन्काले यादृशी उत्कृष्टा स्तुतिरासीत् तादृशी इदानीमपि संजातेत्यर्थः । भूमना भूम्ना बहुत्वेन च युक्तेति शेषः । सर्वदेवसंबन्धित्वात् बह्वीव सञ्जातेत्यर्थः । गौः सर्वान्देवान्प्रति गन्त्री च संवृत्तेत्यर्थः । एतज्ज्ञात्वा सर्वे देवाः । सनीळाः समानस्थानाः । अस्य मम यजमानस्य असुरस्य प्रज्ञावतः । स्वभूते योनौ स्थाने यज्ञाख्ये वेद्याख्ये वा । समाने सर्वदेवाः । साधारणे भरणे सर्वस्य जगतोधारणसमर्थे पोषणसमर्थे च । आ इत्युपसर्गश्रुतेरागच्छन्त्विति शेषः । कथं भूता आगच्छन्तु । उच्यते । बिभ्रमाणाः दृष्टादृष्टफलमस्मभ्यन्धारयन्तः । गृहीत्वेत्यर्थः ॥

---

* निरुक्त ४ । ६ ॥

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः ।
सन्तस्थाने अजरे इतऊती अहानि पूर्वीरुषसो जरन्त ॥ ७ ॥

किं स्विद्वनं किं पुनः तदुपादानकारणभूतपिण्डस्थानी-यमस्य प्रश्नस्य प्रतिवचनसामर्थ्यात् प्रधानमिति द्रष्टव्यन्तस्यो-पादानकारणत्वात् । कः उ सः वृक्षः आस कश्च पुनस्समूलकारणं वृक्षः पृथिवीस्थानः । यस्यावयवः प्रधानमुपादानकारणमस्य प्रतिवचन मानसंभूयस्थिते ? वा । सुप्रतिष्ठिते वा इत्यर्थः । अजरे जरावर्जिते । इत एभ्यः प्राकृतेभ्यो देवेभ्यः ऊतीरवनं रक्षणं ययोः ते इतऊती । सामर्थ्यात् परमात्मा तस्य मूल कारणत्वात् । यतः । उपादानकारणा-न्मूलकारणाद्य द्यावापृथिवी । निष्टतक्षुः । तक्षति करोति कर्मा । निष्कृत्य कृतवन्तो देवा विश्वसृज. । कीदृशौ द्यावापृथिव्यौ । सन्तस्थाने संभूय-स्थिते वा इत्यर्थः । अजरे जरावर्जिते । इतऊती इत एभ्यः प्रकृतेभ्यो देवेभ्यः ऊतीरवनं रक्षणं ययोस्ते इतऊती । रक्षितेत्यर्थः । अथवा इतश्चेतश्च गतिर्वृद्धिर्वा ययोस्ते इतऊती । सर्वतो गते वृद्धे वेत्यर्थः । अहानि पूर्वी अनादिकालप्रवृत्ताः । उषसश्च निष्टतक्षुः देवा । ये एवं सामर्थ्ययुक्ता देवाः तान् सर्वे स्तोतारः जरन्त स्तुवन्तीत्यर्थः ॥

नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति ।
त्वचं पवित्रं कृणुत स्वधावान्यदीं सूर्यं न हरितो वहन्ति ॥ ८ ॥

न एतावत् । नैतावदेवजातं सामर्थ्ययुक्तं । किन्तर्हि एना एभ्यो देवेभ्य. । पर उत्कृष्ट· अन्यदन्यः हिरण्यगर्भोऽस्ति । उक्षा सेक्ता । प्रजानां स्रष्टेत्यर्थः । स हिरण्यगर्भः परमसूक्ष्मो वायुरूपो लिंगात्मा अन्तरनुप्रविश्य द्यावापृथिवी बिभर्ति धारयति । किञ्च । त्वचं पवित्रं मन्त्रं तन्मयीमात्मीयान्त्वचन्तनुमित्यर्थः । दीप्तं वा मन्त्रं । कृणुत करोतु । स्वधावान् । कदा करोति । यत् यदा रश्मः स्वचं सूर्यं । हरितः अश्वान् वहन्ति । तदा देवसृष्टेः प्रागित्यर्थः ॥

स्तेगो न क्षामत्येति पृथ्वीं मिहं न वातो वि ह वाति भूम ।
मित्रो यत्र वरुणो अज्यमानोऽग्निर्वने न व्यसृष्ट शोकम् ॥ ९ ॥

स्तेगः । स्त्यै ष्ट्यै शब्दसंघातयोः । रश्मिसघात

आदित्यः । क्षां पृथिवीं पृथ्वीं विस्तीर्णां । नात्येति नागच्छति तेजसा समस्तान्न व्याप्नोति । पृथिवी स्तूयते । मिहं सर्वस्य सेक्तिं । वृष्टिं । वातः मध्यस्थानो देवो वृष्टिकर्मण्यधिकृतः । न ह नैव । वियान्ति वातिरत्रान्तर्णीतण्यर्थो द्रष्टव्यः । विविधं गमयति । भूम भूम्ना बहुत्वेन । सर्वां वृष्टिम्न पातयत्यसामर्थ्यात् सावशेषामेव पातयतीत्येवं वृष्टिः स्तूयते । अथवा । स्तेगो रश्मिसंघातरूपमविविधं गमयति भूमिं प्राप्त सावशेषामेव वर्षतीति वात: स्तूयते । यत्र प्रजापतौ । मित्रश्च वरुणश्च । कल्याणं कमनीयं सामर्थ्यं ...... ॥

[ द्वात्रिंशत्तमं सूक्तम् ]

अक्षेत्रवित्क्षेत्रविदं ह्यप्राट् स प्रैति क्षेत्रविदानुशिष्टः ।

एतद्वै भद्रमनुशासनस्योत स्रुतिं विंदत्यंजसीनाम् ॥ ७ ॥

* अनुशासनस्य मार्गोपदेशस्य । उत अत अपि । स्रुतिं मार्गं । विन्दति लभते ॥

अद्येदु प्राणीदममन्निमाहापीवृतो अधयन्मातुरूधः ।

एमेनमाप जरिमा युवानमहेळन्वसुः सुमना बभूव ॥ ८ ॥

महाभाग्ययोगात् सर्वात्मभावात् तद्धर्मत्वमापद्य इन्द्र स्तूयते । अद्य इत् अद्येव । [ उ ] इति पदपूरणः । प्र आनीत् प्राणिति जीवति । स्वमायया केनचित् प्राणिरूपेणाद्येव जातः सन् अद्यैव जीवित्वा स्वेच्छया श्वो मरणन इज्यत इत्यर्थः । अद्य ग्रहणञ्च प्रदर्शनार्थं । गर्भस्रावे तत् क्षणं जीवति । हिरण्यगर्भात्मा आमहाप्रलयज्जीवति । एवं सर्वत्र यथाकालं योज्यं । किञ्च न । जीवनमेव केवलम्मरणं वा कालाः कुर्वन्ति सर्वभूतात्मकस्य इन्द्रस्य । किन्तर्हि । अममन् । अमं रोगे । रोगञ्च कुर्वन्ति । इमा इमानि । अहा अहानि काला इत्यर्थः । किञ्च । अपीवृतः वाय्वादि सन्निरोधार्थं वज्रेणाच्छादितः शिशुरूप इन्द्रः । अधयत् पिबति । स्वस्याः मातुः देव मनुष्यादि सर्वजातिस्थाया स्वभूतं ऊधः ऊधस्थं स्तनमित्यर्थः । किञ्च । आ ईमनं आप । ईमिति पदपूरणः । एनमिन्द्रं मर्यादया व्याप्नोति । जरिमा जराभाव. जरेत्यर्थः । युवानन्तरुणं सन्तं । किञ्च । अहेलन्

* अत पूर्वं मन्त्रसत्कस्य भाष्यं नोपलभ्यते ।

अक्रुध्यन् । प्रवसुः प्रशस्तः । सुमनाः शोभनबुद्धिः प्रसन्नचित्तश्च । बभूव भवति । देवादि आविस्थितः महामाययोगादिन्द्रो यद्रूपं कामयते तद् भवति तद्धर्मोयेति समस्तार्थः ॥

एतानि भद्रा कलश क्रियाम कुरुश्रवण ददतो मघानि ।
दान इद्वो मघवानः सो अस्त्वयं च सोमो हृदि यं बिभर्मि ॥२॥

एतानि । भद्रा भद्राणि कल्याणानि शोभनानि । स्तोत्राणि हवींषि च । हे कलश कलाशयन सर्वकलाधारपरिपूर्ण । अथवा कलशसदृश कलशवदुदकाधारेत्यर्थः । अथवान्तर्णीतमत्वर्थमेतत् पदं । द्रोणकलशवन्निन्द्र क्रियाम कृतवन्तो वयं । हे कुरुश्रवण । कुरव ऋत्विजः । कुरूणामृत्विजां स्वभूतानां स्तुतीनां श्रोतः । कस्यार्थाय कृतवन्तो वयं । ददतः मघानि स्तोतृभ्यो यष्टृभ्यश्च धनानि यच्छतः । तवेन्द्रस्यार्थं । एतज्ञात्वा प्रत्युपकारार्थं दानं उद्दत्ते वोऽस्मभ्यं इप्सितार्थानां वः । मघवान् इत्युभयत्र व्यत्ययेन बहुवचनं । यः तत् स्वभूतम् । हे मघवानः मघवन्धनवन् इन्द्र । इति तच्छ्रुतैः यच्छब्दोऽध्याहार्यः । यो ताका प्रियो वा आत्मा सः अस्तु भवतु । अयञ्च सोमः । दाता । हृदि तवेन्द्रस्य हृदये । यं सोमं । हेतुकर्तृत्वेनाहं बिभर्मि धारयामि ॥

वनवासी विनिर्गताचार्योद्गीथस्य कृतो ऋग्वेदभाष्ये पञ्चपञ्चाशोऽध्यायः ॥ कालहा शूलधृक् पातु शंकरः यास्कायनः ॥

[ त्रयस्त्रिंशत्तमं सूक्तम् ]

उत्तरं सूक्तं प्रमेति पञ्चर्चं वैश्वदेवं कवषो ददर्श ।

प्र मा युयुज्रे प्रयुजो जनानां वहामि स्म पूषणमंतरेण ।
विश्वे देवासो अध मामरक्षन्दुःशासुरागादिति घोष आसीत् ॥१॥

मा मां कवषं । प्रयुयुज्रे देवयागकर्मणि प्रयुक्तवन्तो विश्वेदेवाः । कीदृशाः । प्रयुजः जगति स्थितयर्थः यागकर्मणि धनदानेन प्रयोक्तारः । तेषां यजमानानान्तैश्च देवयागकर्मणि ... सन् अहं वहामि 'स्मोत्तरेलङ् चेति, स्म शब्दयोगात् ? भूते लङ् उढवानस्मि प्रापितवानस्मि । स्तुतीर्हवींषि च । पूषणमादित्यं प्रति । क स्थितो वहामि स्म । उच्यते । अन्तरेण मध्येन ।

कस्य । सामर्थ्यात् अग्नीनान्देवानां द्यावापृथिव्योर्वा । देवयागकर्मणि प्रयुज्य च । विश्वे देवासः सर्वे देवाः । अध अथ । मां यजमानं कवषाख्यं । अरक्षन् रक्षितवन्तः । कुतः । दुश्शासुः दुश्शासनात् । शत्रोः असुरराक्षसादिकात् । रक्षितॄणाञ्च तेषान्देवानां घोषः जहि जहीत्यादि शब्द । आगारसर्वस्य लोकस्य कर्णपथमागत । सर्वेण श्रूयत इति । एतदासीत् अभूद्वचनं । एवमतीते । काले । मे । संप्रसादा आसुः ॥   इदानीं देवेष्वप्रसन्नेषु ।

सं मा तपन्त्यभितः सपत्नीरिव पर्शवः ।
नि बाधते अमतिर्नग्नता जसुर्वेर्न वेवीयते मतिः ॥ २ ॥
मूषो न शिश्ना व्यदन्ति माध्यः स्तोतारं ते शतक्रतो ।
सकृत्सु नो मघवन्निन्द्र मृळयाधा पितेव नो भव ॥३॥

इदानीन्तु देवप्रसादादपेतं मा संतपन्ति अन्नाभावा-दाबाल्यात् कुशशयनाच्च दुःखयन्तीत्यर्थः । अभितः उभयतः । उभयोरपि पार्श्वयोरित्यर्थ । पर्शवः किमिव सन्तापयन्ति । सपत्नीव । यथा सपत्न्यः समानभर्तृका स्त्रियः भर्तारं परस्परं वा सन्तापयन्त्येवं । किञ्च । नि बाधते संपीडयति अमति रक्षा[नं]सर्वार्थेषु संमोहः नग्नता च नि बाधते । नग्नतया चात्र निर्धनत्वं लक्ष्यते । दारिद्र्यञ्च मा सं पीडय-तीत्यर्थः । जसु जसि ताडने । शत्रुताडनञ्च निबाधते । किञ्च । वेनः पक्षिण इव यथा पक्षिणो मनः कंपते शाकुनिकव्यथादिभयात् एवं प्रमति. मनः वेपते शत्रुभयात् । शिश्नापरा शिश्नातेः कः प्रत्ययः । छान्द-सत्वात् सकारस्य शकारः । द्विर्वचन प्रकरणे मकुणादीनां क ? इति द्विर्वचनं । 'बहुलं छन्दसीति अभ्यासस्य इत्वं । कोस्यार्थः वायीतानि सूत्राणि तानि हि अन्न, लिप्तत्वात् शौचार्हाणि वेष्यन्त्येचयोमथवा लोके शश्निर्घं प्रजननं प्रसिद्धं तत्सादृश्याच्च पुच्छं शिश्नमुच्यते । यथ, मूषिका घायितानि सूत्राणि अन्नगन्धित्वात् स्वानि वा पुच्छ नि तैलभाण्डके घृत-भाण्डके वा प्रक्षिप्योत्तार्य च विविधं भक्षयन्ति । एवं मा मां । असंपाद्यमाना आध्यः आधयः यागभोगकामा विविधं अर्दयन्ति दुःखयन्ति । स्तोतारं सन्तं । ते तव । हे शतक्रतो बहुकर्मन् एतज्ञात्वा सकृत्ततं । नः

अस्मान्। हे मघवन् धनवन् इन्द्र मृलय ईप्सितार्थप्रदानेन सुष्ठु सुखय। अध अथ। पिता इव प्रियहितयोः नः अस्माकं भव ॥

कुरुश्रवणमावृणि राजानं त्रासदस्यवम् ।

मंहिष्ठं वाघतामृषिः ॥ ४ ॥

इन्द्रादिदेवाभ्यनुज्ञया कुरुश्रवणं। कुरव ऋत्विज उच्यन्ते कर्मणां कर्तृत्वात्। तेषां स्तुतीनां श्रोतारं सततयाजिनमेतन्नामानं चेत्यर्थः। आवृणि मर्यादया वृणोमि प्रार्थये। देवयागार्थन्धनं राजानंत्रासदस्यवं त्रसदस्योः पुत्रं मंहिष्ठं अतिशयेन महितन्दातारन्धनानां। केषामर्थाय। वाघतां। वाघत ऋत्विज उच्यन्ते। यस्येत्यादियो निर्मिश्य मानावाघातः। तेषामर्थाय ऋषिरहं कवषः॥

यस्य मा हरितो रथे तिस्रो वहन्ति साधुया

स्तवै सहस्रदक्षिणे ॥ ५ ॥

लब्ध्वा राजतो धनमनन्तरं किं करोषीति चेदुच्यते। यस्येत्यादित्यः निर्दिश्यते। हरिसंबन्धात् यस्यादित्यस्य[स्व]भूता हरित तिस्र हरि संज्ञका अश्वाः। तयोर्मध्यमाः रथे नियुक्तास्सन्तः। मा मां कवषं यजमानं। प्रतिवहन्ति प्रापयन्त्यादित्यं। कथं वहन्ति। साधुया प्रथमस्यकवचनस्य च्छान्दसं याः। क्रियाविशेषणश्चैतत्। साधु शोभनं। स्तवैः स्तौमि। सहस्रदक्षिणे बहुदक्षिणे यज्ञे जपेयादौ ?

अतः परं यस्येति सूक्तशेषे मृते मित्रातिथौ नृपे उपमश्रवसः स्नेहादृषिः शोकमपनुदत्॥ यस्य प्रस्वादसो गिर इत्यनेन सूक्तं शेषभूतेन चतुर्ऋचेन वर्गेण मृते देहान्तरं गते सति मित्रातिथिनाम्नि नृपे राजनि उपमश्रवो नाम्नः मित्रातिथे राज्ञः पुत्रस्य शोकं स्नेहादेवापनुदत् अवनीतव नृपिः कवषः॥

यस्य प्रस्वादसो गिर उपमश्रवसः पितुः ।

क्षेत्रं न रण्वमूचुषे ॥ ६ ॥

यस्य ऊचुष इत्यनयोरसमानाधिकरण्यादूचुष इति षष्ठ्यर्थे चतुर्थी। लिट् चात्र वर्तमाने। 'छन्दसि लुङ्लङ्लिट' इति। यस्य मित्रातिथिनाम्ना राज्ञः उपमश्रवसः तव पितुः। ऊचुषः प्रवतः

भाषमाणस्य । प्रस्वादसः प्रकर्षेणास्वाद्यः मधुराः गिरः वाचः इव एतेन तुल्यत्वमासर्थ्यात् रण्वं रमणीयाः चित्तप्रीतिकरा इत्यर्थः । किमिव । क्षेत्रसरण्वं । यथा क्षेत्रसरण्वं यथा क्षेत्रं व्रीह्यादि सस्यसंपन्नं रण्वं रमणीयं चित्तप्रीतिकरमेवं वाक्यार्थस्यापरिसमाप्तत्वात् उत्तराया एकवाक्यता योज्या ॥

अधि पुत्रोपमश्रवो नपान्मित्रातिथेरिहि ।
पितुष्टे अस्मि वंदिता ॥ ७ ॥

प्रियवचनेन संबोद्ध्योपमश्रवः उपमश्रवसमृषिगाह कवषः । हे पुत्र उपमश्रवः हे नपान् इत् प्राणान्तक । मित्रातिथेर्मित्रातिथिनाम्नो राज्ञः । अधि इहि अवगच्छ जयजानीहि । किमुच्यते । 'पितुष्टे अस्मि वन्दिता, पूर्वस्यामृचि यस्येति श्रुतेः तस्येत्यध्याहार्यम् । तस्य पितुः । ते तव उपमश्रवससंबन्धिनः । अस्मि भवामि । वन्दिता स्तोता पुरोहितः ऋत्विग्वेत्यर्थ. । एवं सति । त्वाञ्चाहञ्च तुल्यशोकौ एतज्ज्ञात्वा मा शोकं कार्षीः । अहं तव पितुस्थानीयो जीवामीत्यभिप्रायः । किञ्च ॥

यदीशीयामृतानामुत वा मर्त्यानां । जीवेदिन्मघवा मम ॥ ८ ॥

यदि । ईशीय ईश्वरोऽहं स्यां । अमृतानान्देवानामुत वा मर्त्यानां मनुष्याणां । देव मनुष्यादिकस्य सर्वस्य मरण हेतोः निर्धारणे यद्यहं समर्थः स्यामित्यर्थ. । ततः किमुच्यते. । जीवेत् . इत् प्राणान्धारयेदेव न म्रियेत एवेत्यर्थः । मघवा धनवानीश्वरो राजा मित्रातिथिः । मम कवषस्य पुरोहितभूतस्य याज्य इति शेषः । अन्यञ्च कवष करुयते ॥

न देवानामति व्रतं शतात्मा चन जीवति ।
तथा युजा वि वावृते ॥ १० ॥

देवानां ब्रह्मादीनां । व्रते कर्म मर्यादाकारलक्षणमि[त्यर्थः] । अतीत्य शतायुर्वै पुरुषः । दैवैर्या दया कृता तां स्वकर्मानुरूपाञ्च उल्लंघ्यते इत्यर्थः । शतात्मा च न बहुशरीरवीर्यमतिरपीत्यर्थः । यथ रावणादिकः न जीवति । कस्मात् । यस्मात् । तथा तेन प्रकारेण । शतं वर्षाणि पुरुषो जीवतीति स्वकर्मानुरूपश्चेत्यनेन प्रकारेणेत्यर्थः । उत्पत्ति स्थिति

प्रलय करणेन। युज्यत इति युक् प्रजापतिः तेन युजा प्रजापतिना। विवृते विवर्तितान्निर्मितत्रागादित्यर्थः। एतज्ज्ञात्वा मा शोकं कार्षीः॥

[ चतुस्त्रिंशत्तमं सूक्तम् ]

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानः ।
सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥१॥

प्रवेपाः प्रवेपिनः प्रकंपनशीलाः। अक्षाः। मा मां। बृहतः महतः विभीतकस्य संबन्धिनः फलत्वेन फलानीत्यर्थः। मादयन्ति हर्षयन्ति। प्रवातेजाः प्रवरवाते काले वर्षासु प्रवणे वा प्रदेशे जाताः। इरिणे अस्तरे। वर्वृतानाः वर्तमानाः। न च मा मां मादयन्ति। किं तर्हि। सोमस्य इव यथा सोमस्य। मौजवतस्य मूजवत्पर्वते जातस्य। भक्षः पानं यजमानादीनत्यर्थमुदयत्येवं। विभीदकः विकारः अर्थः। जागृ विजयपराजययोः हर्षशोकाभ्यां जागरणस्य कर्ता। मह्यमिति चतुर्थी। मामच्छान् अन्तर्णीत भृशार्थमेतद् द्रष्टव्य। अचच्छदं अत्यर्थं मादयति। केन। सामर्थ्यात् हर्षेण॥

न मा मिमेथ न जिहील एषा शिवा सखिभ्य उत मह्यमासीत्।
अक्षस्याहमेकपरस्य हेतोरनुव्रतामप जायामरोधम् ॥ २ ॥

मा मां। न मिमेथ नाक्रुष्टवती सुशीलावत्वात्। नजिहीले नाविलज्जा विलपति सुचरितत्वात्। अथवा न चुकोपैषा। एषा मम जाया। किञ्च। शिवा सुखा। आसनप्रदान पादप्रक्षालनादि यथाप्रतिपत्या सुखकरीत्यर्थः। सखिभ्यः सखिभूतेभ्यः कितवेभ्यः। न केवलं मम। सखीभ्य एव सुखाते अपि मह्यमासीत् सुखा एवं गुणविशिष्टां स ऱीं। अक्षस्य एक परस्य एकः परः प्रधान यस्य स एक परः तस्य एक परस्य पराजयप्रधानस्येत्यर्थः। अथवा एकपरस्य एक कृताय प्रधानस्य हेतोः कारणात् अक्षनिमित्तेन निमित्तेनेत्यर्थ। अनुव्रतां अनुगतकर्माणं अनुकूलामित्यर्थः। जायां भार्यामहमेव। अरोधं उपरोधितवानस्मि वित्तनाशेन दुःखित कृतवानित्यर्थः॥

द्वेष्टि श्वश्रूरप जाया रुणद्धि न नाथितो विन्दते मर्डितारम्।
अश्वस्येव जरतो वस्न्यस्य नाहं विन्दामि कितवस्य भोगम् ॥३॥